तस्माद् "अवग्रम्" इत्यत्र पाठः कर्तव्यः[1]। तदेवंविधं विशिष्टमेव शब्दार्थयोर्लक्षणमुपादेयम्। तेन नेयार्थापार्थादयो[2] दूरोत्सारितत्वात्पृथङ् वक्तव्याः।

एवं शब्दार्थयोः प्रसिद्धस्वरूपातिरिक्तमन्यदेव रूपान्तरमभिधाय न तावन्मात्रमेव काव्योपयोगि, किन्तु वैचित्र्यान्तरविशिष्टमित्याह—

उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः।
वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते[3] ॥१०॥

उभौ द्वावप्येतौ शब्दार्थावलंकार्यावलंकरणीयौ केनापि शोभातिशयकारिणालङ्करणेन[4] योजनीयौ। किं तत्तयोरलङ्करणमित्यभि[5]धीयते—तयोः पुनरङ्कृतिः। तयोर्द्वित्वसंख्याविशिष्टयोरप्यलंकृतिः पुनरेकैव, यथा द्वावप्यङ्क्रियेते[6]। कासौ—वक्रोक्तिरेव। वक्रोक्तिः[7] प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाभिधा[8]। कीदृशी—वैदग्ध्यभङ्गीभणितिः। वैदग्ध्यं[9] विदग्धभावः कविकर्म[10]कौशलं तस्य भङ्गी विच्छित्तिः, तया भणितिः[11] विचित्रैवाभिधा वक्रोक्तिरित्युच्यते। तदिदमत्र तात्पर्यम्—यत् शब्दार्थौ पृथगवस्थितौ केनापि व्यतिरिक्तेनालङ्करणेन योज्येते, किन्तु वक्रतावैचित्र्ययोगितयाभिधानमेवा[12]-

---

(1) करणीयः A. (2) नेयार्थादयो A. These refer to the दोषs so-called. (3) समुद्रबन्ध (p. 8) and जदरथ (p. 8, last line only) on Ruyyaka quote this verse in connexion with their exposition of the वक्रोक्ति-जीवित-कार's views. (4) ०लङ्कारेण A. (5) ०रभि० lost in A. (6) ०लङ्कृतौ क्रियेते A. (7) वक्रो० lost in A. (8) ०भिधान B. समुद्रबन्ध appropriates (p. 8) this passage, from here to शोभातिशयकारित्वात्. (9) कर्म missing in A. (10) भणि० lost in A. (11) ०मेव तयो० in A.

नयोरलङ्कारः, तस्यैव शोभातिशयकारित्वात्। एतच्च वक्रताव्याख्यानावसर एवोदाहरिष्यते।

ननु च किमिदं प्रसिद्धार्थविरुद्धं प्रतिज्ञायते यद्वक्रोक्तिरेवालङ्कारो नान्यः कश्चिदिति, यतश्चिरन्तनैरपरं[1] स्वभावोक्तिलक्षणमलङ्करणमाम्नातं तच्चातीवरमणीयमित्यसहमानस्तदेव निराकर्तुमाह[2]—

**अलङ्कारकृतां येषां स्वभावोक्तिरलङ्कृतिः।**
**अलङ्कार्यतया तेषां किमन्यदवतिष्ठते ॥११॥**

येषामलङ्कारकृतामलङ्कारकाराणां स्वभावोक्तिरलङ्कृतिः, या स्वभावस्य पदार्थधर्मलक्षणस्य परिस्पन्दस्य उक्तिरभिधा सैवालङ्कृतिरलङ्करणमिति प्रतिभाति, ते सुकुमारमानसत्वाद् विवेकक्लेशद्वेषिणः। यस्मात् स्वभावोक्तिरिति कोऽर्थः? स्वभाव एवोच्यमानः स एव यद्यलङ्कारस्तत्किम[3]न्यत्तद्व्यतिरिक्तं काव्यशरीरकल्पं वस्तु विद्यते यत्तेषामलङ्कार्यतया विभूष्यत्वेनावतिष्ठते पृथगवस्थितिमासादयति, न किञ्चिदित्यर्थः।

ननु च पूर्वमवस्थापितम्—यद्वाक्यस्यैवाविभागस्य सालङ्कारस्य काव्यत्वमिति (१।६) तत्किमर्थमेतदभिधीयते? सत्यम्, किन्तु तत्रासत्यभूतोऽप्यपोद्धारबुद्धिविहितो विभागः कर्तुं शक्यते वर्णपद[4]न्यायेन वाक्यपदन्यायेन चेत्युक्तमेव (पः ६)। एतदेवप्रकारान्तरेण विकल्पयितुमाह—

**स्वभावव्यतिरेकेण वक्तुमेव न युज्यते।**
**वस्तु तद्रहितं यस्मान्निरुपाख्यं प्रसज्यते ॥१२॥**

---

(1) ०नैः परं B. The word चिरन्तन would refer to writers like दण्डी (ii 8·13) and रुद्रट (p. 49). (2) भामह ii 85, 87, 93. Kuntaka follows भामह in rejecting स्वभावोक्ति as an अलङ्कार. (3) ०किमपरम० A. (4) वक्तृपद A.

स्वभावव्यतिरेकेण स्वपरिस्पन्दं विना निःस्वभावं वक्तुमभिधातुमेव न युज्यते न शक्यते। वस्तु वाच्यलक्षणम्। कुतः—तद्रहितं तेन स्वभावेन रहितं वर्जितं यस्मान्निरुपाख्यं प्रसज्यते। उपाख्याया निष्क्रान्तं निरुपाख्यम्। उपाख्या शब्दः, तस्यागोचरभूतमभिधानायोग्यमेव सम्पद्यते। यस्मात् स्वभावशब्दस्येदृशी व्युत्पत्तिः—भवतोऽस्मादभिधानप्रत्ययाविति भावः, स्वस्यात्मनो भावः स्वभावः[1]। तेन स एव यस्य कस्यचित्पदार्थस्य प्रख्योपाख्यावतारनिबन्धनम्, तेन वर्जितमसत्कल्पं वस्तु शशविषाणप्रायं शब्दज्ञानागोचरतां प्रतिपद्यते। स्वभावयुक्तमेव सर्वथाभिधेयपदवीमवतरतीति[2] शाकटिकवाक्यानामपि सालङ्कारता प्राप्नोति, स्वभावोक्तियुक्तत्वेन। एतदेव युक्त्यन्तरेण विकल्पयति—

शरीरं चेदलङ्कारः किमलङ्कुरुतेऽपरम्।
आत्मैव नात्मनः स्कन्धं क्वचिदप्यधिरोहति ॥१३॥

यस्य कस्यचिद्वर्ण्यमानस्य वस्तुनो वर्णनीयत्वेन स्वभाव एव वर्ण्य[3]-शरीरम्। स एव चेदलङ्कारो यदि विभूषणं तत्किमपरं तद्व्यतिरिक्तं विद्यते यदलङ्कुरुते[4] विभूषयति। स्वात्मानमेवालङ्करोतीति चेत्तदयुक्तम्, अनुपपत्तेः। यस्मादात्मैव नात्मनः स्कन्धं क्वचिदप्यधिरोहति, शरीरमेव शरीरस्य न कुत्रचिदप्यंसमधिरोहतीत्यर्थः[5], स्वात्मनि क्रियाविरोधात्। अन्यच्चाभ्युपगम्यापि ब्रूमः—

भूषणत्वे स्वभावस्य विहिते भूषणान्तरे।
भेदावबोधः प्रकटस्तयोरप्रकटोऽथवा ॥१४॥

---

(1) Wanting in A. (2) ०मनुसरति A. (3) वर्णना A. (4) कुरुते lost in A. (5) ०त्यर्थः lost in A.

स्पष्टे सर्वत्र संसृष्टिरस्पष्टे सङ्करस्ततः।
अलङ्कारान्तराणां च विषयो नावशिष्यते ॥१५॥

भूषणत्वे स्वभावस्य अलङ्कारत्वे स्वपरिस्पन्दस्य[1] यदा भूषणान्तरमलङ्कारान्तरं विधीयते तदा विहिते कृते, तस्मिन् सति, द्वयी गतिः सम्भवति। कासौ—तयोः स्वभावोक्त्यलङ्कारान्तरयोः[2] भेदावबोधो भिन्नत्वप्रतिभासः प्रकटः सुस्पष्टः कदाचिदप्रकटश्चापरिस्फुटो वेति। तदा स्पष्टे प्रकटे तस्मिन् सर्वत्र सर्वस्मिन्[3] कविवाक्ये संसृष्टिरेवैकालङ्कृतिः प्राप्नोति। अस्पष्टे तस्मिन्नप्रकटे सवत्रैवैकः सङ्करोऽलङ्कारः प्राप्नोति। ततः को दोषः स्यादित्याह—अलङ्कारान्तराणां च विषयो नावशिष्यते। अन्येषामलङ्काराणामुपमादीनां विषयो गोचरो न कश्चिदप्यवशिष्यते, निर्विषयत्वमेवायातीत्यर्थः। ततस्तेषां लक्षणकरण[4]-वैयर्थ्यप्रसङ्गः। यदि वा[5] तावेव संसृष्टिसङ्करौ तेषां विषयत्वेन कल्प्येते तदपि न किञ्चित्, तैरेवालङ्कारैस्तस्यार्थस्यानङ्गीकृतत्वात्। इत्यनेनाकाशचर्वणप्रतिमेनालमलीकनिबन्धनेन। प्रकृतमनुसरामः। सर्वथा यस्य कस्यचित् पदार्थजातस्य[6] कविव्यापारविषयत्वेन वर्णनापदवीमवतरतः स्वभाव एव सहृदयाह्लादकारी काव्यशरीरत्वेन वर्णनीयतां प्रतिपद्यते। स एव च यथायोगं शोभातिशयकारिणा येन केनचिदलङ्कारेण योजयितव्यः। तदिदमुक्तम्—"अर्थः सहृदयाह्लादकारिस्वस्पन्दसुन्दरः" (१।६) इति। "उभावेतावलङ्कार्यौ" (१।१०) इति च।

एवं शब्दार्थयोः परमार्थमभिधाय 'शब्दार्थौ' इति (१।७) काव्यलक्षणवाक्ये पदमेकं व्याख्यातम्। इदानीं 'सहितौ' इति (१।७) व्याख्यातुं साहित्यमेतयोः पर्यालोच्यते—

(1) परिस्पन्दस्य B. (2) ॰अन्तर missing in A. (3) Wanting in A. (4) करण missing in A. (5) च B. (6) पदार्थस्य जातस्य A.

शब्दार्थौ सहिताविव प्रतीतौ स्फुरतः सदा।
सहिताविति ताविव किमपूर्वं विधीयते ॥ १६ ॥

शब्दार्थावभिधानाभिधेयौ सहितावविगुक्ताविव[1] सदा सर्वकालं प्रतीतौ स्फुरतः ज्ञाने प्रतिभासेते। ततस्ताविव सहितावविगुक्ताविति किमपूर्वं विधीयते न किञ्चिदभूतं[2] निष्पाद्यते, सिद्धं साध्यत इत्यर्थः। तदेवं शब्दार्थयोर्निसर्गसिद्धं[3] साहित्यं कः सचेताः पुनस्तदभिधानेन निष्प्रयोजनमात्मानमायासयति ? सत्यमेतत्, किन्तु न[4] वाच्यवाचकलक्षणशाश्वतसम्बन्धनिबन्धनं वस्तुतः[5] साहित्यमित्युच्यते। यस्मादेतस्मिन् साहित्यशब्देनाभिधीयमाने कष्टकल्पनोपरचितानि गाङ्कुटादिवाक्यान्यसम्बद्धानि शाकटिकादि[6]वाक्यानि च सर्वाणि साहित्यशब्देनाभिधीयेरन्। तेन पदवाक्यप्रमाणव्यतिरिक्तं किमपि तत्त्वान्तरं साहित्य[7]मिति विभागोऽपि न स्यात्। ननु च पदादिव्यतिरिक्तं यत्किमपि साहित्यं नाम तदपि सुप्रसिद्धमेव, पुनस्तदभिधानेऽपि कथं न पौनरुक्त्यप्रसङ्गः ? अतएवैतदुच्यते[8]—यदिदं[9] साहित्यं नाम तदेतावति[10]निःसीमनि समयाध्वनि[11] साहित्यशब्दमात्रेणैव[12] प्रसिद्धम्। न[13] पुनरेतस्य कविकर्मकौशलकाष्ठाधिरूढिरमणीयस्याद्यापि[14] कश्चिदपि विपश्चिदयमस्य परमार्थ इति मनाङ्मात्रमपि विचारपदवीमवतीर्णः। तदद्य सरस्वतीहृदयारविन्दमकरन्दबिन्दुसन्दोहसुन्दराणां

(1) ०ताविव युक्ताविव B. (2) अपूर्वं (for अभूतं) A. (3) स्वभाव० (for निसर्ग) B. (4) Wanting in A. (5) वस्तु न A. (6) शाकटिक० A. (7) ०हित्य० lost in A. (8) A has अ, then *lacunae* for two syllables, and then व तदुच्यते. (9) तदिदं A. (10) तदेव A. (11) सहिताध्वनि A. (12) साहित्यमात्रशब्देनैव B. (13) Wanting in A. (14) All letters after ०रमणीयस्य lost in A.

स्तबकविवचसामन्तरामोद[1]मनोहरत्वेन परिस्फुरदेतत्[2] सहृदय[3]षट्चरणगोचरतां नीयते।

साहित्यमनयोः शोभाशालितां प्रति काप्यसौ।
अन्यूनानतिरिक्तत्वमनोहारिण्यवस्थितिः॥ १७॥

सहितयोर्भावः साहित्यम्। अनयोः शब्दार्थयोर्या काप्यलौकिकी चेतनचमत्कारकारितायाः कारणम् अवस्थितिर्विचित्रैव विन्यासभङ्गी। कीदृशी—अन्यूनानतिरिक्तत्वमनोहारिणी, परस्परस्पर्धित्वरमणीया। यस्यां द्वयोरेकतरस्यापि न्यूनत्वं निकर्षो न विद्यते नाप्यतिरिक्तत्वमुत्कर्षो वास्तीत्यर्थः। ननु च तथाविधं साम्यं द्वयोरुपहतयोरपि सम्भवतीत्याह—शोभाशालितां प्रति। शोभा सौन्दर्यमुच्यते। तया शालते श्लाघते यः स शोभाशाली, तस्य भावः शोभाशालिता, तां प्रति सौन्दर्यश्लाघितां प्रतीत्यर्थः। सैव च[4] सहृदयाह्लादकारिता। तस्यां स्पर्धित्वेन यासाववस्थितिः परस्परसाम्यसुभगमवस्थानं सा[5] साहित्यमुच्यते। तत्र वाचकस्य वाचकान्तरेण वाच्यस्य वाच्यान्तरेण साहित्यमभिप्रेतम्, वाक्ये काव्यलक्षणस्य परिसमाप्तत्वादिति प्रतिपादितमेव (१।७)।

ननु च वाचकस्य वाच्यान्तरेण वाच्यस्य वाचकान्तरेण कथं न साहित्यमिति चेत्तन्न, क्रमव्युत्क्रमे प्रयोजनाभावादसमन्वयाच्च। तस्मादेतयोः शब्दार्थयोर्यथास्वं यस्यां स्वसम्पत्सामग्रीसमुदायः सहृदयाह्लादकारी परस्परस्पर्धया परिस्फुरति, सा काचिदेव वाक्यविन्याससम्पत् साहित्यव्यपदेशभाग् भवति।

---

(1) All syllables after ०घाम and before द lost in A. (2) This phrase is missing in A. (3) सहृदयहृदय A. (4) Wanting in A. (5) Wanting in B.

मार्गानुगुण्यसुभगो माधुर्यादिगुणोदयः ।
अलङ्करणविन्यासो वक्रतातिशयान्वितः ॥ ३४ ॥
वृत्त्यौचित्यमनोहारि रसानां परिपोषणम् ।
स्पर्धया विद्यते यत्र यथास्वमुभयोरपि ॥ ३५ ॥
सा काप्यवस्थितिस्तद्विदानन्दस्पन्दसुन्दरा[1] ।
पदादिवाक्परिस्पन्दसारः साहित्यमुच्यते ॥ ३६ ॥

एतेषां च पदवाक्यप्रमाणसाहित्यानां चतुर्णामपि प्रतिवाक्य[2]मुपयोगः। तथा चैतत्पदमेवंस्वरूपं गकारौकारविसर्जनीयात्मकमेतस्य चार्थस्य प्रातिपदिकार्थपञ्चक[3]लक्षणस्याख्यातपदार्थषट्कलक्षणस्य वाचकमिति पदसंस्कारलक्षणस्य व्यापारः। पदानां च परस्परान्वयलक्षणसम्बन्ध-निबन्धनमेतद्वाक्यार्थ[4]तात्पर्यमिति वाक्यविचारलक्षणस्योपयोगः। प्रमाणेन प्रत्यक्षादिनैतदुपपन्नमिति युक्तियुक्तत्वं नाम प्रमाणलक्षणस्य प्रयोजनम्। इदमेव परिस्पन्दमाहात्म्यात्सहृदयहृदयहारितां[5] प्रतिपन्न[6]मिति साहित्यस्योपयुज्यमानता। एतेषां यद्यपि प्रत्येकं स्वविषये प्राधान्यमन्येषां गुणीभावस्तथापि सकलवाक्परिस्पन्दजीवि-ताय[7]मानस्यास्य साहित्यलक्षणस्यैव कविव्यापारस्य[8] वस्तुतः सर्वा[9]-तिशायित्वम्। यस्मादेतदमुख्यतयापि यत्र वाक्यसन्दर्भान्तरे स्वपरि-मलमात्रेणैव संस्कारमारभते[10] तस्यैतदधिवास[11]शून्यतामात्रेणैव रामणीयकविरहः पर्यवस्यति। तस्मादुपादेयतायाः परिहाणिरुत्पद्यते। तथा च स्वप्रवृत्तिवैयर्थ्य[12]प्रसङ्गः[13]। शास्त्रातिरिक्तप्रयोजनत्वं शास्त्राभि-धेयचतुर्वर्गाधिकफलत्वं चास्य पूर्वमेव प्रतिपादितम् (१।३,५)।

(1) ०तद्विदाह्लादैकनिबन्धनम् A. (2) यथावाक्य A. (3) क missing in A. (4) ०अर्थ wanting in A. (5) सहृदयाह्लादकारितां A. (6) प्रति० lost in A. (7) ०विताय० lost in A. (8) Omitted in B. (9) सर्वा०.B. (10) ०रमारभ० lost in A. (11) ०वासना B. (12) वैयर्थ्य omitted in A. (13) A reads here (शास्त्रा)तिरिक्तप्रयोजनप्रसङ्गः।

अपर्यालोचितेऽप्यर्थे बन्धसौन्दर्यसम्पदा।
गीतवद्धृदयाह्लादं तद्विदां विदधाति यत्॥ ३७॥
वाच्यावबोधनिष्पत्तौ पदवाक्यार्थवर्जितम्।
यत्किमप्यर्पयत्यन्तः पानकास्वादवत्सताम्॥ ३८॥
शरीरं जीवितेनेव स्फुरितेनेव जीवितम्।
विना निर्जीवतां येन वाक्यं[1] याति विपश्चिताम्॥ ३९॥
यस्मात्किमपि सौभाग्यं[2] तद्विदामेव गोचरम्।
सरस्वती समभ्येति[3] तदिदानीं विचार्यते॥ ४०॥

इत्यन्तरश्लोकाः।

एवं सहिताविति व्याख्याय कविव्यापारवक्रत्वं व्याचष्टे—

**कविव्यापारवक्रत्वप्रकाराः सम्भवन्ति षट्।**
**प्रत्येकं बहवो भेदास्तेषां विच्छित्तिशोभिनः॥१८॥**

कवीनां व्यापारः कविव्यापारः काव्यक्रियालक्षणस्तस्य वक्रत्वं वक्रभावः प्रसिद्धप्रस्थानव्यतिरेकि वैचित्र्यं तस्य प्रकाराः प्रभेदाः षट् सम्भवन्ति। मुख्यतया तावन्त एव सम्भवन्तीत्यर्थः। तेषां प्रत्येकं प्रकाराः[4] बहवो भेदा विशेषाः। कीदृशाः—विच्छित्तिशोभिनः वैचित्र्यभङ्गीभ्राजिष्णवः। सम्भवन्तीति सम्बन्धः। तदेव दर्शयति—

**वर्णविन्यासवक्रत्वं पदपूर्वार्धवक्रता।**
**वक्रतायाः परोऽप्यस्ति प्रकारः प्रत्ययाश्रयः[5]॥१९॥**

वर्णानां विन्यासो वर्णविन्यासः अक्षराणां विशिष्टन्यसनं तस्य

---

(1) काव्यं B. (2) किमप्यसौभाग्यं B. (3) तमभ्येति A. (4) प्रतिकारं B.
(5) B reads कारिका's 19, 20 consecutively.

वक्रत्वं वक्रभावः प्रसिद्धप्रस्थानव्यतिरेकिणा वैचित्र्येणोपनिबद्धः सन्निवेशविशेषविहितस्तद्विदाह्लादकारी शब्दशोभातिशयः। यथा

प्रथममरुणच्छायस्तावत्ततः कनकप्रभ-
स्तदनु विरहोत्ताम्यत्तन्वी कपोलतलद्युतिः।
प्रसरति ततो ध्वान्तक्षोद[1]क्षमः क्षणदामुखे
सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः:[2] ॥ ४१ ॥

अत्र वर्णविन्यासवक्रतामात्र[3]विहितः शब्दशोभातिशयः सुतरां समुन्मीलितः। एतदेव वर्णविन्यासवक्रत्वं चिरन्तनेष्वनुप्रास इति प्रसिद्धम्। अस्य च प्रभेदस्वरूपनिरूपणं लक्षणावसरे करिष्यते (२।१)।

पदपूर्वार्धवक्रता—पदस्य सुबन्तस्य तिङन्तस्य वा यत्पूर्वार्धं प्रातिपदिकलक्षणं धातुलक्षणं वा तस्य वक्रता वक्रभावो विन्यासवैचित्र्यम्। तत्र च बहवः प्रकाराः सम्भवन्ति। यत्र रूढिशब्दस्यैव प्रस्तावसमुचितत्वेन वाच्यप्रसिद्धधर्मान्तरा[4]ध्यारोपगर्भत्वेन निबन्धः स पदपूर्वार्धवक्रतायाः प्रथमः प्रकारः। यथा

रामोऽस्मि सर्वं सहे[5] ॥ ४२ ॥

द्वितीयः—यत्र संज्ञाशब्दस्य वाच्य[6]प्रसिद्धस्य धर्मस्य लोकोत्तरातिशयाध्यारोपं गर्भीकृत्योपनिबन्धः। यथा

---

(1) ध्वंस ( for क्षोद ) in B. (2) सुभाषितावली no. 2004 (anon) = काव्यप्रकाश p. 260 (anon) = सरस्वतीकण्ठाभरण *ad* i, 87 (anon) = सदुक्तिकर्णामृत i, 396 = अलङ्कारतिलक ( वाग्भट ) p. 45 ( anon ) = अलङ्कारशेखर *ad* viii 1 (anon) The चन्द्रिका commentary on मम्मट says that this verse occurs in मालतीमाधव as a description of morning. But this is probably a mistake, as it does not occur in any MS of the drama. (3) मात्र wanting in A. (4) ०प्रसिद्धान्तरधर्मा A. (5) महानाटक v, 7 = ध्वन्यालोक p. 61 (anon) = प्रतिहारेन्दुराज p. 86 = मुकुलभट्ट p. 11 = काव्यप्रकाश p. 188 (anon). (6) वाच्यधर्मं A.

रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं परा-
मस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम्[1]।
वन्दीवैष[2] यशांसि गायति मरुद्यस्यैकबाणाहति-
श्रेणीभूतविशालताल[3]विवरोद्गीर्णैः स्वरैः सप्तभिः[4]॥४३॥

अत्र रामशब्दो लोकोत्तरशौर्यादिधर्मातिशयाध्यारोपपरत्वेनोपात्तो वक्रतां प्रथयति।

पर्यायवक्रत्वं नाम प्रकारान्तरं पदपूर्वार्धवक्रतायाः[5]—यत्रानेकशब्दाभिधेयत्वे वस्तुनः किमपि पर्यायपदं प्रस्तुतानुगुणत्वेन प्रयुज्यते। यथा

वामं कज्जलवद्विलोचनमुरो रोहद्विसारिस्तनं
मध्यं क्षाममकाण्ड एव विपुलाभोगा नितम्बस्थली।
सद्यः प्रोद्गतविस्मयैरिति गणैरालोक्यमानं मुहुः
पायाद्वः प्रथमं वपुः स्मररिपोर्मिश्रीभवत्कान्तया॥४४॥

अत्र 'स्मररिपोः' इति पर्यायः कामपि वक्रतामुन्मीलयति। यस्मात्कामशत्रोः कान्तया मिश्रीभावः शरीरस्य न कथञ्चिदपि[6] सम्भाव्यत[7] इति गणानां सद्यः प्रोद्गतविस्मयत्वमुपपन्नम्। सोऽपि पुनः पुनः परिशीलने-

---

(1) ताम् B. (2) चैष B. (3) ०साल A. (4) सप्तमैः A. This verse is quoted anonymously by the काव्यप्रकाश (pp. 182, 246). The commentators on मम्मट attribute it to the lost राघवानन्दनाटक. माणिक्यचन्द्र says that it forms the speech of कुम्भकर्ण in that drama; while ०चन्द्रिका says that it is addressed by विभीषण to रावण in the same play. It is attributed to विशाखदत्त in सदुक्तिकर्णामृत (see Dhruva's edition of मुद्राराक्षस, introd. p. xii). Also quoted anonymously in the सरस्वतीकण्ठाभरण (p. 341). (5) ०वक्रता० lost in A. (6) कथञ्चित् A. (7) संभाव्य A.

नाश्चर्यकारीति 'प्रथम'-पदस्य[1] जीवितम्। एतच्च पर्यायवक्रत्वं वाच्यासम्भविधर्मान्तर[2]गर्भीकारेणापि दृश्यते। यथा

अङ्गराज सेनापते राजवल्लभ रक्षैनं भीमाद्दुःशासनम्[3] इति ॥४५॥

अत्र त्रयाणामपि पर्यायाणा[4]मसंभाव्यमानतत्परित्राणपात्रत्वलक्षणमकिञ्चित्करत्वं गर्भीकृत्योपहस्यते—रक्षैनमिति।

पदपूर्वार्धवक्रताया उपचारवक्रत्वं नाम प्रकारान्तरं विद्यते—यत्रामूर्तस्य वस्तुनो मूर्तद्रव्याभिधायिना शब्देनाभिधानमुपचारात्। यथा—निष्कारणं निकारकणिकापि मनस्विनां मानसमायासयति। यथा—हस्तापचेयं यशः। 'कणिका'-शब्दो[5] मूर्तवस्तुस्तोकार्थाभिधायी[6] स्तोकत्वसामान्योपचारादमूर्तस्यापि निकारस्य स्तोकाभिधानपरत्वेन[7] प्रयुक्तस्तद्विदाह्लादकारित्वाद्वक्रतां पुष्णाति। 'हस्तापचेयम्' इति मूर्तपुष्पादिवस्तु[8]सम्भविसंहतत्वसामान्योपचारादमूर्तस्यापि यशसो हस्तापचेयमित्यभिधानं वक्रत्वमावहति। द्रवरूपस्य[9] वस्तुनो वाचकशब्दस्तरङ्गितत्वादिधर्म[10]निबन्धनः किमपि सादृश्यमात्रमवलम्ब्य संहतस्यापि वाचकत्वेन प्रयुज्यमानः कविप्रवाहे प्रसिद्धः। यथा

श्वासो[11]त्कम्पतरङ्गिणि स्तनतटे[12] इति ॥४६॥

क्वचिदमूर्तस्यापि द्रवरूपार्थाभिधायी वाचकत्वेन प्रयुज्यते। यथा

---

(1) शब्दस्य B, for पदस्य. (2) ०सम्भव० only, A. (3) वेणीसंहार, *ad* iii 47, p. 46=व्यक्तिविवेक p. 45. (4) अपि पर्यायाणां dropped in B. (5) The whole passage from मूर्तद्रव्याभिधायिना up to this word is dropped in A. सहृदयवन्ध (p. 9) substantially quotes this passage. (6) मूर्तद्रव्याभिधायी only in A. (7) सूचकोभिधान० B. (8) वस्तु missing in A. (9) द्रव्य० A. (10) धर्म wanting in A. (11) वासो० A. (12) कवीन्द्रवचनसमुच्चय no. 450 (anon). This verse is quoted in full below.

एकां कामपि कालविप्रुषममी शौर्योष्मकण्डूव्यय-
व्यग्राः स्युश्चिरविस्मृतामरचमूडिम्बाहवा[1] बाहवः ॥४७॥

एतयोस्तरङ्गिणीति विप्रुषमिति च वक्रतामावहतः।

विशेषणवक्रत्वं नाम पदपूर्वार्धवक्रतायाः प्रकारो विद्यते—यत्र विशेषणमाहात्म्यादेव तद्विदाह्लादकारित्वलक्षणं वक्रत्वमभिव्यज्यते। यथा

दाहोऽम्भः प्रसृतिम्पचः प्रचयवान् बाष्पः प्रणालोचितः
श्वासाः प्रेङ्खितदीप्रदीपलतिकाः[2] पाण्डिम्नि मग्नं वपुः।
किञ्चान्यत्कथयामि रात्रिमखिलां त्वन्मार्ग[3]वातायने
हस्तच्छत्रनिरुद्धचन्द्रमहसस्तस्याः स्थितिर्वर्तते[4] ॥ ४८ ॥

अत्र दाहो बाष्पः श्वासो वपुरिति न किञ्चिद्वैचित्र्यमुन्मीलितम्। प्रत्येकं विशेषणमाहात्म्यात्पुनः काचिदेव वक्रताप्रतीतिः। यथा च

व्रीडायोगा[5]न्नतवदनया सन्निधाने गुरूणां
बद्धोत्कम्पस्तनकलशया[6] मन्युमन्तर्नियम्य।
तिष्ठेत्युक्तं किमिव न तया यत्समुत्सृज्य बाष्पं
मय्यासक्तश्चकित[7]हरिणीहारिनेत्रत्रिभागः[8] ॥ ४९ ॥

अत्र चकितहरिणीहारीति क्रियाविशेषणं नेत्रत्रिभागासङ्गस्य गुरुसन्निधानविहिताप्रगल्भत्वरमणीयस्य कामपि कमनीयतामावहति[9], चकितहरिणीहारिविलोचनसाम्येन।

---

(1) ०डिम्बाहवा lost in A. This verse is quoted in full in ch. iii.
(2) दीपदीप्तकलिकाः A. (3) त्वदङ्क० A. (4) विद्धशालभञ्जिका ii, 21 = सुभाषितावली no. 1411 = कवीन्द्रवचन० no. 276 = रुय्यक p. 68 (anon) = Jayaratha p. 41 (anon) = अलङ्कारशेखर p. 68 (anon) ii. चित्रमीमांसा p. 103 (anon). (5) व्रीडालोला० A. (6) वेपोत्कम्पस्तनकलशयोः B.
(7) ०श्चकित० lost in A. (8) शार्ङ्गधरपद्धति no. 3464 (नेत्रत्रिभागव्रज्ञयशस्विनः) = सुभाषितावली no. 1335 (यश.स्वामिनः) = ध्वन्यालोक p. 132 (anon).
(9) पुष्णाति (for आवहति) B.

अयमपरः पदपूर्वार्धवक्रतायाः प्रकारो यदिदं संवृतिवक्रत्वं नाम—यत्र पदार्थस्वरूपं प्रस्तावानुगुण्येन[1] केनापि निकर्षेणोत्कर्षेण वा युक्तं व्यक्ततया साक्षादभिधातुमशक्यं संवृतिसामर्थ्योपयोगिना शब्देनाभिधीयते। यथा

सोऽयं दम्भधृतव्रतः प्रियतमे कर्तुं किमप्युद्यतः[2] ॥ ५० ॥

अत्र वत्सराजो वासवदत्ताविपत्ति[3]विधुरहृदयस्तत्प्राप्तिप्रलोभनवशेन पद्मावतीं परिणेतुमीह[4]मानस्तदेवाकरणीयमित्यवगच्छन् तस्य वस्तुनो महापातकस्येवाकीर्तनीयतां ख्यापयति किमपीत्यनेन संवरणसमर्थेन सर्वनामपदेन। यथा च

निद्रानिमीलितदृशो मदमन्थरायाः[5]
नाप्यर्थवन्ति न च यानि निरर्थकानि।
अद्यापि मे वरतनोर्मधुराणि[6] तस्या-
स्तान्यक्षराणि हृदये किमपि ध्वनन्ति[7] ॥ ५१॥

---

(1) ०वानुगुणेन A. (2) This forms the last line of the verse चक्षुर्यस्य तवाननादपगतम् from तापसवत्सराजचरित. Kuntaka quotes this verse in full in ch. iv. See below, abstract of that chapter for reference. (3) ०विवर्त्ति A. (4) ०णेतुमपी B. (5) ०मन्थराणि B. (6) गदितानि B, for मधुराणि. (7) चौरपञ्चाशिका (ed. Solf, no. 36, see also note p. 31). This verse does not occur in Bohlen's edition (Berlin, 1833). Since this verse is quoted (anonymously) in ०अवलोक on दशरूपक (ed. Parab, *ad* iv, 23), विल्हण's authorship of the verse appears doubtful. In सुभाषितावली (no. 1280) and जल्हणकृत सूक्तिमुक्तावली (74a), this श्लोक is attributed to कलशक. Quoted also anonymously in Hemacandra p. 89 and Samudrabandha p. 9. (समुद्रबन्ध probably quotes it from the वक्रोक्तिजीवित itself).

अत्र किमपीति तदाकर्णनविहितायाश्चित्तचमत्कृतेरनुभवैकगोचरत्वलक्षणमव्यपदेश्यत्वं प्रतिपाद्यते[1]। तानीति[2] तथाविधानुभवविशिष्टतया स्मर्यमाणानि। नाप्यर्थवन्तीति स्वसंवेद्यत्वेन व्यपदेशाविषयत्वं प्रकाश्यते। तेषां च न च यानि निरर्थकानीत्यलौकिकचमत्कारकारित्वादपार्थकत्वं निवार्यते। त्विष्वप्येतेषु विशेषणवक्रत्वं प्रतीयते।

इदमपरं पदपूर्वार्धवक्रतायाः प्रकारान्तरं सम्भवति वृत्तिवैचित्र्यवक्रत्वं नाम—यत्र समासादितवृत्तीनां कासाञ्चिद् विचित्राणामेव कविभिः परिग्रहः क्रियते। यथा

मध्येऽङ्कुरं पल्लवाः[3] ॥ ५२ ॥

यथा च

पाण्डिम्नि मग्नं वपुः[4] ॥ ५३ ॥

यथा वा

सुधाविसरनिष्यन्दसमुल्लासविधायिनि।
हिमधामनि खण्डेऽपि न जनो नोन्मनायते ॥ ५४ ॥

अपरं लिङ्गवैचित्र्यं नाम पदपूर्वार्धवक्रतायाः प्रकारान्तरं दृश्यते—यत्र भिन्नलिङ्गानामपि शब्दानां वैचित्र्याय सामानाधिकरण्योपनिबन्धः। यथा

इत्थं जडे जगति को नु बृहत्प्रमाण-
कर्णः करी ननु भवेद् ध्वनितस्य पात्रम्[5] ॥ ५५ ॥

यथा च

मैथिली तस्य दाराः[6] ॥ इति[7] ॥ ५६ ॥

---

(1) This passage is quoted by समुद्रबन्ध p. 9. (2) तानि only, B. (3) विद्धशालभञ्जिका i, 23. (4) See above p. 46, sl. 33. (5) कण्ठः (for कर्णः) A. Quoted in full in सुभाषितावली no. 628 (भट्टवासुदेवस्य). The verse is given in full below, ch. ii. (6) बालरामायण iii 27, p. 64. (7) Wanting in A.

अन्यदपि लिङ्गवैचित्र्यवक्रत्वम्—यत्रानेकलिङ्गसम्भवेऽपि सौकुमार्यात् कविभिः स्त्रीलिङ्गमेव प्रयुज्यते, 'नामैव स्त्रीति पेशलम्' (२।२२) इति कृत्वा। यथा[1]

एतां पश्य पुरस्तटीम्[2] इति ॥ ५७ ॥

पदपूर्वार्धस्य धातोः क्रियावैचित्र्यवक्रत्वं नाम वक्रत्वप्रकारान्तरं विद्यते—यत्र क्रियावैचित्र्यप्रतिपादनपरत्वेन[3] वैदग्ध्य[4]भङ्गीभणिति-रमणीयान् प्रयोगान् निबध्नन्ति कवयः। तत्र[5] क्रियावैचित्र्यं बहुविधं विच्छित्तिविततव्यवहारं दृश्यते। यथा

रइकेलिहिअणिअंसणकरकिसलअरुद्धणअणजुअलस्स।
रुद्दस्स तइअणअणं पव्वइपरिचुम्बिअं जअइ[6] ॥ ५८ ॥

अत्र समानेऽपि हि[7] स्थगनप्रयोजने साध्ये तुल्ये च लोचनत्वे, देव्याः परिचुम्बनेन यस्य निरोधः सम्पाद्यते तद्भगवतस्तृतीयं[8] नयनं जयति सर्वोत्कर्षेण वर्तत इति वाक्यार्थः। अत्र जयतीति क्रिया-पदस्य किमपि सहृदयहृदयसंवेद्यं वैचित्र्यं[9] परिस्फुरदेव लक्ष्यते। यथा

स्वेच्छाकेसरिणः स्वच्छस्वच्छायायासितेन्दवः।
त्रायन्तां वो मधुरिपोः प्रपन्नार्तिच्छिदो नखाः[10] ॥ ५९ ॥

---

(1) Wanting in A. (2) दशरूपकावलोक p. 41 (anon) = Hemacandra p. 297 (anon) = सरस्वतीकण्ठा० p. 300 (anon). This verse is quoted in full below, at ii 22. (3) ०पादनद्वारेण परत्वेन A. (4) वैचित्र्य A. (5) तच्च A.

(6) रतिकेलिहृतनिवसनकरकिसलयरुद्धनयनयुगलस्य।
रुद्रस्य तृतीयनयनं पार्वतीपरिचुम्बितं जयति ॥ इति छाया।

गाथासप्तशतक (ed. Weber) 455 = काव्यप्रकाश p. 168. (7) Wanting in B. (8) तृतीयं missing in A. (9) ०वैद्यं वै lost in A. (10) This is मङ्गलश्लोक to the वृत्ति of the ध्वन्यालोक.

अत्र नखानां[1] सकललोकप्रसिद्धच्छेदनव्यापारव्यतिरेकि किमप्यपूर्वमिव प्रपन्नार्तिच्छेदनलक्षणं क्रियावैचित्र्यमुपनिबद्धम्। यथा च

स दहतु दुरितं शाम्भवो वः शराग्निः[2] ॥ ६० ॥

अत्र च पूर्ववदेव क्रियावैचित्र्यप्रतीतिः[3]। यथा च

कुसुप्पलदलमिलिअलोअणेहिं
हेलालोलणमाणिअणअणेहिं।
लीलइ लीलावईहि णिरुद्धओ
सिढिलिअचाओ जअइ मअरद्धओ[4] ॥ ६१ ॥

अत्र लोचनैर्लोलया लीलावतीभिर्निरुद्धः स्वव्यापारपराङ्मुखीकृतः सन्[5] शिथिलीकृतचापः कन्दर्पो जयति सर्वोत्कर्षेण वर्तत इति किमुच्यते, यतस्तास्तथाविधविजयावाप्तौ सत्यां जयन्तीति वक्तव्यम्। तदयमत्राभिप्रायः—यत्त[6]ल्लोचनविलासानामेवंविधं जैत्रताप्रौढभावं पर्यालोच्य चेतनत्वेन स स्वचापारोपणायासमुपसंहृतवान्। यतस्तेनैव त्रिभुवनविजयावाप्तिः परिसमाप्यते ममेति मन्यमानस्य तस्य सहायत्वो[7]त्कर्षातिशयो जयतीति क्रियापदेन[8] कर्तृतायाः कारणत्वेन

---

(1) नखा lost in A. 2) अमरुशतक, श्लो० 2. (3) ०वैचित्र्यप्रसिद्धिः A. (4) A reads ०चलोणेहिं in the first line, ०लोलणो and णअणेहिं in the second line; लीलाए and लीलावलीहि in the third line, and सिढिलिअचाओ in the last line. B reads ०चलोणिहिं in the first line; हेलालोलवमालिहि in the second line; निरुद्धउ in the third line, ०चाउ and मअरद्धउ in the last line. The conjectural छाया of the verse would be :

कर्णोत्पलदलमिलितलोचनैर्हेलालोलनमानितनयनाभिः।
लीलया लीलावतीभिर्निरुद्धः शिथिलीकृतचापो जयति मकरध्वजः॥

If we read ०चलोणेहि in the first line with MS A, then would it mean ०चलावण्यैः, qualifying णअणेहिं, which would be नयनैः, in the second line? (5) स A. (6) यदेत B. (7) सहृदयत्वो० B. (8) ०पद B.

कवेश्चेतसि परिस्फुरितः। तेन किमपि क्रियावैचित्र्यमत्र तद्विदाह्लादकारि प्रतीयते। यथा च

तान्यक्षराणि हृदये किमपि ध्वनन्ति[1] ॥ ६२ ॥

अत्र जल्पन्ति वदन्तीत्यादि न प्रयुक्तम्, यस्मात्तानि कयापि विच्छित्या किमप्यनाख्येयं समर्पयन्तीति कवेरभिप्रेतम्।

वक्रतायाः परोऽप्यस्ति प्रकारः प्रत्ययाश्रयः[2] इति। वक्रभावस्यान्योऽपि प्रभेदो विद्यते। कीदृशः—प्रत्ययाश्रयः। प्रत्ययः सुप्तिङ् च यस्याश्रयः स्थानं स तथोक्तः। तस्यापि बहवः प्रकाराः सम्भवन्ति—संख्यावैचित्र्यविहितः, कारकवैचित्र्यविहितः, पुरुषवैचित्र्यविहितश्च। तत्र, संख्यावैचित्र्यविहितः—यस्मिन् वचनवैचित्र्यं काव्यबन्धशोभायै[3] निबध्यते। यथा

मैथिली तस्य दाराः[4] ॥ इति ॥ ६३ ॥

यथा च

फुल्लेन्दीवरकाननानि नयने पाणी सरोजाकराः[5] ॥ ६४ ॥

अत्र द्विवचनबहुवचनयोः सामानाधिकरण्यमतीव चमत्कारकारि। कारकवैचित्र्यविहितः—यत्राचेतनस्यापि पदार्थस्य चेतनत्वाध्यारोपेण चेतनस्यैव क्रियासमावेशलक्षणं रसादिपरिपोषणार्थं कर्तृत्वादिकारकं[6] निबध्यते। यथा

स्तनद्वन्द्वं मन्दं स्नपयति बलाद्बाष्पनिवहो
हठादन्तःकण्ठं[7] लुठति सरसः पञ्चमरवः।

---

(1) See above p. 34. (2) This is part of कारिका 19, which is now taken up for comment. (3) काव्यशोभोपनिबन्धनाय B. (4) See above p. 35. (5) तापसवत्सराज॰ (Berlin MS, i. 68b). (6) कारकत्वं A. (7) कण्ठे B.

अरज्जयोत्स्नापाण्डुः पतति च कपोलः करतले
न जानीमस्तस्याः क इव हि विकार[1]व्यतिकरः ॥ ६५ ॥

अत्र बाष्पनिवहादीनामचेतनानामपि चेतनत्वाध्यारोपेण कविना कर्तृत्वमुपनिबद्धम्—यत्तस्या[2] विवशायाः सत्यास्तेषामेवंविधो व्यवहारः, सा पुनः स्वयं किञ्चिदप्याचरितुं समर्थेत्यभिप्रायः। अन्यच्च कपोलादीनां तद[3]वयवानामेतदवस्थत्वं प्रत्यक्षतयास्मदादिगोचरतामापद्यते, तस्याः पुनर्योऽसावन्तर्विकारव्यतिकरस्तं[4] तदनुभवैकविषयत्वादयं न जानीमः। यथा च

चापाचार्यस्त्रिपुरविजयी कार्त्तिकेयो विजेयः
शस्त्रव्यस्तः सदनमुदधिर्भूरियं हन्तकारः।
अस्त्येवैतत् किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः[5] ॥ ६६ ॥

अत्र चन्द्रहासो लज्जत इति पूर्ववत् कारकवैचित्र्यप्रतीतिः।

पुरुषवैचित्र्यविहितं वक्रत्वं विद्यते—यत्र प्रत्यक्तापरभावविपर्यासं प्रयुञ्जते कवयः, काव्यवैचित्र्यार्थं युष्मदस्मदि वा प्रयोक्तव्ये प्रातिपदिकमात्रं निबध्नन्ति। यथा

अस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति तम्[6] ॥ ६७ ॥

अत्र त्वं न जानासीति वक्तव्ये वैचित्र्याय देवो न जानातीत्युक्तम्। एवं[7] युष्मदादिविपर्यासः क्रियापदं विना प्रातिपादिकमात्रेऽपि दृश्यते। यथा

अयं जनः प्रष्टुमनास्तपोधने
न चेद्रहस्यं प्रतिवक्तुमर्हसि[8] ॥ ६८ ॥

---

(1) विकारस्य B. (2) यदि तस्या B. (3) A omits तद॰. (4) A omits तं (5) बालरामायण ii, 37 (p. 42)=काव्यप्रकाश pp. 323, 354=व्यक्तिविवेक pp. 45, 66. (6) See above p. 31. (7) एष हि A. (8) कुमारसम्भव v, 40.

अत्राहं प्रष्टुकाम इति वक्तव्ये ताटस्थ्यप्रतीत्यर्थमयं जन इत्युक्तम्। यथा वा

सोऽयं दम्भधृतव्रतः[1] इति ॥ ६९ ॥

अत्र सोऽहमिति वक्तव्ये पूर्ववद् 'अयम्' इति वैचित्र्यप्रतीतिः। एते च मुख्यतया वक्रताप्रकाराः कतिचिन्निदर्शनार्थं प्रदर्शिताः। शिष्टाश्च सहस्रशः सम्भवन्तीति महाकविप्रवाहे सहृदयैः स्वयमेवोत्प्रेक्षणीयाः।[1]

एवं वाक्यावयवानां पदानां[2] प्रत्येकं वर्णाद्यवयवद्वारेण यथासम्भवं वक्रभावं व्याख्यायेदानीं पदसमुदायभूतस्य वाक्यस्य वक्रता व्याख्यायते—

**वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा।**
**यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति:[3] ॥ २० ॥**

वाक्यस्य वक्रभावोऽन्यः। वाक्यस्य पदसमुदायभूतस्य। आख्यातं साव्ययकारकविशेषणं वाक्यमिति यस्य प्रतीतिस्तस्य श्लोकादेर्वक्रभावो भङ्गीभणितिवैचित्र्यम् अन्यः पूर्वोक्तवक्रताव्यतिरेकी समुदायवैचित्र्यनिबन्धनः कोऽपि सम्भवति। यथा

उपस्थितां पूर्वमपास्य लक्ष्मीं
वनं मया सार्धमसि प्रपन्नः।
त्वामाश्रयं प्राप्य तया नु कोपा-
त्सोढास्मि न त्वद्भवने वसन्ती[4] ॥ ७० ॥

एतत्सीतया तथाविधकरुणाक्रान्तान्तःकरणया वल्लभं प्रति सन्दिश्यते —यदुपस्थितां सेवासमापन्नां लक्ष्मीमपास्य श्रियं परित्यज्य पूर्वं यस्त्वं

(1) See above p. 34. (2) A omits this word. (3) This कारिका is quoted by समुद्रबन्ध p. 9. (4) रघुवंश xiv, 60.

मया सार्धं वनं प्रपन्नो विपिनं प्रयातस्तस्य तव स्वप्नेऽप्येतन्न सम्भाव्यते। तया पुनस्तस्मादेव कोपात् स्त्रीस्वभावसमुचितसपत्नीविद्वेषात्त्वद्गृहे वसन्ती न सोढास्मि। तदिदमुक्तं भवति—यत्तस्मिन् विधुरदशाविसंष्ठुलेऽपि समये तथाविधप्रसादास्पदतामध्यारोप्य यदिदानीं साम्राज्ये निष्कारणपरित्यागतिरस्कारपात्रतां नीतास्मीत्येतदुचितमनुचितं वा विदितव्यवहारपरम्परेण भवता स्वयमेव[1] विचार्यतामिति।

स च वक्रभावस्तथाविधो यः सहस्रधा भिद्यते बहुप्रकारं भेदमासादयति। सहस्रशब्दोऽत्र संख्याभूयस्त्वमात्रवाची, न नियतार्थ[2]वृत्तिः, यथा—सहस्रदलमिति[3]। यस्मात् कविप्रतिभानामानन्त्यान्नियतत्वं न सम्भवति। योऽसौ वाक्यस्य वक्रभावो बहुप्रकारः, न जानीमस्तं कीदृशमित्याह—यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति। यत्र यस्मिन्नसावलङ्कारवर्गः कविप्रवाहप्रसिद्धप्रतीतिरुपमादिरलङ्करणकलापः सर्वः सकलोऽप्यन्तर्भविष्यति[4] अन्तर्भावं व्रजिष्यति[5], पृथक्त्वेन नावस्थाप्यते[6]। तत्प्रकारभेदत्वेनैव[7] व्यपदेशमासादयिष्यतीत्यर्थः। स चालङ्कारवर्गः स्वलक्षणावसरे प्रतिपदमुदाहरिष्यते।

एवं वाक्यवक्रतां व्याख्याय वाक्यसमूहरूपस्य प्रकरणस्य तत्समुदायात्मकस्य च प्रबन्धस्य वक्रता व्याख्यायते—

**वक्रभावः प्रकरणे प्रबन्धे वास्ति[8] यादृशः।**
**उच्यते सहजाहार्यसौकुमार्यमनोहरः॥ २१॥**

वक्रभावो विन्यासवैचित्र्यं प्रबन्धैकदेशभूते प्रकरणे यादृशोऽस्ति यादृग् विद्यते प्रबन्धे वा नाटकादौ सोऽप्युच्यते कथ्यते[9]। कीदृशः—सहजाहार्यसौकुमार्यमनोहरः। सहजं स्वाभाविकमाहार्यं व्युत्पत्त्यु-

(1) स्व lost in A. (2) नियता० lost in A. (3) सहस्रमवध्यमिति B. (4) अन्तर्भविष्यति omitted in B. (4) अनुभविष्यति for व्रजिष्यति A. (6) नावस्थास्यते B. (7) ०स्वभाव A, for भेद. (8) अप्यस्ति A. (9) omitted in A.

पार्जितं यत्सौकुमार्यं रामणीयकं तेन मनोहरो हृदयहारी यः स तथोक्तः। तत्र प्रकरणे वक्रभावो यथा—रामायणे मारीचमायामयमाणिक्यमृगानुसारिणो रामस्य करुणाक्रन्दाकर्णनकातरान्तःकरणया जनकराजपुत्र्या तत्प्राणपरित्राणाय स्वजीवितपरिरक्षानिरपेक्षया[1] लक्ष्मणो निर्भर्त्स्य प्रेषितः। तदेतदत्यन्तमनौचित्ययुक्तम्[2], यस्मादनुचरसन्निधाने प्रधानस्य तथाविधव्यापारकरण[3]मसम्भावनीयम्। तस्य च सर्वातिशयचरितयुक्तत्वेन वर्ण्यमानस्य तेन कनीयसा प्राणपरित्राणसम्भावनेत्येतदत्यन्तमसमीचीनमिति पर्यालोच्य उदात्तराघवे[4] कविना वैदग्ध्यवशेन मारीचमृगमारणाय प्रयातस्य परित्राणार्थं लक्ष्मणस्य सीतया कातरत्वेन रामः प्रेरित इत्युपनिबद्धम्। अत्र च तद्विदाह्लादकारित्वमेव वक्रत्वम्। यथा च किरातार्जुनीये किरातपुरुषोक्तिषु[5] वाच्यत्वेन स्वमार्गणमार्गणमात्र[6]मेवोपक्रान्तम्। वस्तुतः पुनरर्जुनेन सह तात्पर्यार्थपर्यालोचनया विग्रहो वाक्यार्थतामुपनीतः। तथा च तत्रैवोच्यते—

प्रयुज्य सामाचरितं विलोभनं
भयं विभेदाय धियः प्रदर्शितम्।
तथाभियुक्तं च शिलीमुखार्थिना
यथेतरन्न्याय्यमिवाभासते[7] ॥ ७१ ॥

प्रबन्धे वक्रभावो यथा—कुत्रचिन्महाकविविरचिते राम[8]कथोपनिबन्धे नाटकादौ पञ्चविधवक्रतासामग्रीसमुदायसुन्दरं सहृदय-

---

(1) निरपेक्ष omitted in A, which reads ०परिरक्षया only. (2) ०युक्तम् A. (3) व्यापारणं A. (4) This lost drama is quoted in दशरूपकावलोक, by Hemacandra and in साहित्यदर्पण. (5) B omits किरात, but A reads किरातपुरुषोक्तिरिति. (6) स्वमार्गमार्गण० A; स्वमार्गणमात्र० B. (7) किरात० xiv, 7. (8) रामायण० A.

हृदयहारि महापुरुषवर्णनमुपक्रमे प्रतिभासते। परमार्थतस्तु विधिनिषेधात्मकधर्मोपदेशः पर्यवस्यति, रामवद्वर्तितव्यं न रावणवदिति। यथा च, तापसवत्सराजे कुसुमसुकुमारचेतसः सरसविनोदैकरसिकस्य नायकस्य चरितवर्णनमुपक्रान्तम्। वस्तुतस्तु व्यसनार्णवे निमज्जन्निजो राजा तथाविधनयव्यवहारनिपुणैरमात्यैस्तैस्तैरुपायैरुत्तारणीय इत्युपदिष्टम्। एतच्च स्वलक्षणव्याख्यानावसरे व्यक्ततामायास्यति।

एवं कविव्यापारवक्रताषट्कमुद्देशमात्रेण व्याख्यातम्। विस्तरेण तु स्वलक्षणावसरे व्याख्यास्यते।

क्रमप्राप्तत्वेन बन्धोऽधुना व्याख्यास्यते—

वाच्यवाचकसौभाग्यलावण्यपरिपोषकः।
व्यापारशाली वाक्यस्य[1] विन्यासो बन्ध उच्यते ॥२२॥

विन्यासो विशिष्टं न्यसनं यः सन्निवेशः स एव व्यापारशाली बन्ध उच्यते। व्यापारोऽत्र प्रस्तुतकाव्यक्रियालक्षणः। तेन शालते श्लाघते यः सस्तथोक्तः। कस्य—वाक्यस्य श्लोकादेः। कीदृशः—वाच्यवाचकसौभाग्यलावण्यपरिपोषकः। वाच्यवाचकयोर्द्वयोरपि वाच्यस्याभिधेयस्य वाचकस्य च शब्दस्य वक्ष्यमाणं सौभाग्यलावण्यलक्षणं यद्गुणद्वयं तस्य परिपोषकः पुष्टतातिशयकारी। सौभाग्यं प्रतिभासंरम्भफलभूतं चेतनचमत्कारित्वलक्षणम्, लावण्यं सन्निवेशसौन्दर्यम्, तयोः परिपोषकः। यथा

दत्त्वा वामकरं नितम्बफलके लीलावलम्बध्यया
प्रोत्तुङ्गस्तनमंसचुम्बिचिबुकं कृत्वा तया मां प्रति।

---

(1) The reading of the commentary is वाक्यस्य which is preferrable, although the MS here reads काव्यस्य in the कारिका.

प्रान्तप्रोतनवेन्द्रनीलमणिमन्मुक्तावलीविभ्रमाः
सासूयं प्रहिताः स्मरज्वरमुचो दिव्याः कटाक्षच्छटाः[1] ॥७२॥

अत्र समग्रकविकौशलसम्पाद्यस्य चेतनचमत्कारित्वलक्षणस्य सौभाग्यस्य, कियन्मात्रवर्णविन्यासविच्छित्तिविहितस्य पदसन्धानसम्पदुपार्जितस्य च लावण्यस्य परः परिपोषो विद्यते ।

एवं च स्वरूपमभिधाय तद्विदाह्लादकारित्वमभिधत्ते—

वाच्यवाचकवक्रोक्तित्रितयातिशयोत्तरम् ।
तद्विदाह्लादकारित्वं किमप्यामोदसुन्दरम् ॥२३॥

तद्विदाह्लादकारित्वं काव्यविदानन्दविधायित्वम् । कीदृशम्—वाच्यवाचकवक्रोक्तित्रितयातिशयोत्तरम् । वाच्यमभिधेयं वाचकं शब्दो वक्रोक्तिरलङ्करणम्, एतस्य त्रितयस्य योऽतिशयः कोऽप्युत्कर्षस्तस्मादुत्तरमतिरिक्तम् । स्वरूपेणातिशयेन च स्वरूपेणान्यत् किमपि तत्त्वान्तरमेतदतिशयेनैतस्माच्चित्रितयादपि लोकोत्तरमित्यर्थः । अन्यच्च कीदृशम्—किमप्यामोदसुन्दरम् । किमप्यव्यपदेश्यं सहृदयहृदयसंवेद्यम् आमोदः सुकुमारवस्तुधर्मो रञ्जकत्वं नाम, तेन सुन्दरं रञ्जकत्वरमणीयम् । यथा

हंसानां निनदेषु यैः कवलितैरासज्यते कूजता-
मन्यः कोऽपि कषायकण्ठलुठनादाघर्घरो विभ्रमः ।
ते सम्प्रत्यकठोरवारणवधूदन्ताङ्कुरस्पर्धिनो
निर्याताः कमलाकरेषु बिसिनीकन्दाग्रिमग्रन्थयः[2] ॥ ७३ ॥

अत्र त्रितयेऽपि वाच्यवाचकवक्रोक्तिलक्षणे प्राधान्येन न कश्चिदपि कवेः संरम्भो विभाव्यते । किन्तु प्रतिभावैचित्र्यवशेन किमपि तद्विदाह्लादकारित्वमुन्मीलितम् । यद्यपि सर्वेषामुदाहरणानामविकलकाव्यलक्षणपरिसमाप्तिः सम्भवति तथापि यत्प्राधान्येनाभिधीयते

(1) कवीन्द्रवचन, २१२ (anon).

(2) Quoted anonymously in ध्वन्यालोक ch. iv, p. 242.

स एवांशः प्रत्येकमुद्रिक्ततया तेषां परिस्फुरतीति सहृदयैः स्वयमेवोत्प्रेक्षणीयम् ।

एवं काव्यसामान्यलक्षणमभिधाय तद्विशेषलक्षणविषयप्रदर्शनार्थं मार्गभेदनिबन्धनं त्रैविध्यमभिधत्ते—

**सम्प्रति तत्र ये मार्गाः कविप्रस्थानहेतवः ।**
**सुकुमारो विचित्रश्च मध्यमश्चोभयात्मकः ॥२४॥**

तत्र तस्मिन् काव्ये मार्गाः पन्थानस्त्रयः[1] सम्भवन्ति। न द्वौ चत्वारः, स्वरादिसंख्यावत्तावतामेव वस्तुतस्तज्ज्ञैरुपलम्भात्। ते च कीदृशाः—कविप्रस्थानहेतवः। कवीनां प्रस्थानं प्रवर्तनं तस्य हेतवः, काव्यकरणस्य कारणभूताः। किमभिधानाः—सुकुमारो विचित्रश्च मध्यमश्चेति। कीदृशो मध्यमः—उभयात्मकः। उभयमनन्तरोक्तं मार्गद्वयमात्मा यस्येति विग्रहः। छायाद्वयोपजीवीत्युक्तं भवति। तेषाञ्च स्वलक्षणावसरे स्वरूपमाख्यास्यते।

अत्र च बहुविधा विप्रतिपत्तयः सम्भवन्ति। यस्माच्चिरन्तनैर्विदर्भादिदेशविशेषसमाश्रयणेन वैदर्भीप्रभृतयो रीतयस्तिस्रः समाम्नाताः[2]। तासां चोत्तमाधममध्यमत्ववैचित्र्येण त्रैविध्यम्। अन्यैश्च[3] वैदर्भगौडीयलक्षणं मार्गद्वितयमाख्यातम्। एतच्चोभयमप्ययुक्तियुक्तम्। यस्माद्देशभेदनिबन्धनत्वे रीतिभेदानां देशानामानन्त्यादसंख्यत्वं प्रसज्यते। न च विशिष्टरीतियुक्तत्वेन काव्यकरणं मातुलेयभगिनीविवाहवद् देशधर्मतया व्यवस्थापयितुं शक्यम्। देशधर्मो हि वृद्धव्यवहारपरम्परामात्रशरणः शक्यानुष्ठानतां नातिवर्तते। तथाविधकाव्यकरणं पुनः शक्त्यादिकारणकलापसाकल्यमपेक्ष्यमाणं न शक्यते

(1) B adds सन्ति here.

(2) वामन i. 2. 9-13.

(3) दण्डी i, 42.

यथाकथञ्चिदनुष्ठातुम्। न च दाक्षिणात्यगीतविषयसुस्वरतादिध्वनिरामणीयकवत्तस्य स्वाभाविकत्वं वक्तुं पार्यते। तस्मिन् सति तथाविधकाव्यकरणं सर्वस्य स्यात्। किञ्च, 'शक्तौ विद्यमानायामपि व्युत्पत्त्यादिराहार्यकारणसम्पत्प्रतिनियतदेशविषयतया न व्यवतिष्ठते, नियमनिबन्धनाभावात् तत्रादर्शनाद् अन्यत्र च दर्शनात्। न च रीतीनामुत्तमाधममध्यमत्वभेदेन त्रैविध्यमव्यवस्थापयितुं न्याय्यम्। यस्मात् सहृदयाह्लादकारिकाव्यलक्षणप्रस्तावे वैदर्भीसदृशसौन्दर्यासम्भवान्मध्यमाधमयोरुपदेशवैयर्थ्यमायाति। परिहार्यत्वेनाप्युपदेशो न युक्ततामालम्बते, तैरेवानभ्युपगतत्वात्। न चागतिकगतिन्यायेन यथाशक्ति दरिद्रदानादिवत् काव्यं करणीयतामर्हतामर्हति। तदेवं निर्वचनसमाख्यामात्रकरणकारणत्वे देशविशेषाश्रयणस्य वयं न विवदामहे। मार्गद्वितयवादिनामप्येतान्येव दूषणानि। तदलमनेन निःसारवस्तुपरिमलनव्यसनेन।

कविस्वभावभेदनिबन्धनत्वेन काव्यप्रस्थानभेदः समञ्जसतां गाहते। सुकुमारस्वभावस्य कवेस्तथाविधैव सहजा शक्तिः समुद्भवति, शक्तिशक्तिमतोरभेदात्। तया च तथाविधसौकुमार्यरमणीयां व्युत्पत्तिमाबध्नाति। ताभ्यां च सुकुमारवर्त्मनाभ्यासतत्परः क्रियते। तथैव चैतस्माद् विचित्रः स्वभावो यस्य कवे[1]स्तद्विदाह्लादकारिकाव्यलक्षणकरणप्रस्तावात् सौकुमार्यव्यतिरेकिणा वैचित्र्येण रमणीय एव, तस्य च काचिद्विचित्रैव तदनुरूपा शक्तिः समुल्लसति। तया च तथाविधवैदग्ध्यबन्धुरां व्युत्पत्तिमाबध्नाति। ताभ्यां च वैचित्र्यवासनाधिवासितमानसो विचित्रवर्त्मनाभ्यासभाग् भवति। एवमेतदुभयकविनिबन्धनसंवलितस्वभावस्य कवेस्तदुचितैव शबलशोभातिशयशालिनी शक्तिः समुदेति। तया च तदुभयपरिस्पन्दसुन्दरव्युत्पत्त्युपार्जनमाचरति। ततस्तच्छायाद्वितयपरिपोषपेशलाभ्यासपरवशः सम्पद्यते।

(1) B reads क only.

तदेवमेते कवयः सकलकाव्यकरणकलापकाष्ठाधिरूढिरमणीयं किमपि काव्यमारभन्ते, सुकुमारं विचित्रमुभयात्मकं च। त एव तत्प्रवर्तननिमित्तभूता मार्गा इत्युच्यन्ते। यद्यपि कविस्वभावभेदनिबन्धनत्वादनन्तभेदभिन्नत्वमनिवार्यं तथापि परिसंख्यातुमशक्यत्वात् सामान्येन त्रैविध्यमेवोपपद्यते। तथा च रमणीयकाव्यपरिग्रहप्रस्तावे स्वभावसुकुमारस्तावदेको राशिः, तद्व्यतिरिक्तस्यारमणीयस्यानुपादेयत्वात्। तद्व्यतिरेकी रामणीयकविशिष्टो विचित्र इत्युच्यते। तदेतयोर्द्वयोरपि रमणीयत्वादेतदीयच्छायाद्वितयोपजीविनोऽस्य रमणीयत्वमेव न्यायोपपन्नं पर्यवस्यति। तस्मादेषां प्रत्येकमस्खलितस्वपरिस्पन्दमहिम्ना तद्विदाह्लादकारित्वपरिसमाप्तेर्न कस्यचिन्न्यूनता।

ननु च शक्त्योरान्तरतम्यात् स्वाभाविकत्वं वक्तुं युज्यते, व्युत्पत्त्यभ्यासयोः पुनराहार्ययोः कथमेतद् घटते? नैष दोषः, यस्मादास्तां तावत् काव्यकरणम्, विषयान्तरेऽपि सर्वस्य कस्यचिदनादिवासनाभ्यासाधिवासितचेतसः स्वभावानुसारिणाविव व्युत्पत्त्यभ्यासौ प्रवर्तेते। तौ च स्वभावाभिव्यञ्जनेनैव साफल्यं भजतः। स्वभावस्य तयोश्च परस्परमुपकार्योपकारकभावेनावस्थानात् स्वभावस्तावदारभते, तौ च तत्परिपोषमातनुतः। तथा चाचेतनानामपि भावः स्वभावसंवादिभावान्तरसन्निधानमाहात्म्यादभिव्यक्तिमासादयति, यथा चन्द्रकान्तमणयश्चन्द्रमसः करपरामर्शवशेन स्पन्दमानसहजरसप्रसराः सम्पद्यन्ते।

तदेवं मार्गानुद्दिश्य तानेव क्रमेण लक्षयति—

**अम्लानप्रतिभोद्भिन्ननवशब्दार्थबन्धुरः।**
**अयत्नविहितस्वल्पमनोहारिविभूषणः ॥२५॥**
**भावस्वभावप्राधान्यन्यक्कृताहार्यकौशलः।**
**रसादिपरमार्थज्ञमनःसंवादसुन्दरः ॥२६॥**

अविभावितसंस्थानरामणीयकरञ्जकः ।
विधिवैदग्ध्यनिष्पन्ननिर्माणातिशयोपमः ॥२७॥
यत् किञ्चनापि वैचित्र्यं[1] तत्सर्वं प्रतिभोद्भवम् ।
सौकुमार्यपरिस्पन्दस्यन्दि यत्र विराजते ॥२८॥
सुकुमाराभिधः सोऽयं येन सत्कवयो गताः ।
मार्गेणोत्फुल्लकुसुमकाननेनेव षट्पदाः ॥२९॥

सुकुमाराभिधः सोऽयं सोऽयं पूर्वोक्तलक्षणः सुकुमारशब्दाभिधानः, येन मार्गेण सत्कवयः कालिदासप्रभृतयो गताः प्रयाताः, तदाश्रयेण काव्यानि कृतवन्तः । कथम्—उत्फुल्लकुसुमकाननेनेव षट्पदाः । उत्फुल्लानि विकसितानि कुसुमानि पुष्पाणि यस्मिन् कानने वने तेन षट्पदा इव भ्रमरा यथा । विकसितकुसुमकाननसाम्येन तस्य कुसुमसौकुमार्यसदृशमाभिजात्यं द्योत्यते । तेषां च भ्रमरसादृश्येन कुसुममकरन्दकल्पसारसंग्रहव्यसनिता । स च कीदृशः—यत्र यस्मिन् किञ्चनापि कियन्मात्रमपि वैचित्र्यं विचित्रभावो वक्रोक्तियुक्तत्वम् । तत्सर्वमलङ्कारादिप्रतिभोद्भवं कविशक्तिसमुल्लसितमेव, न पुनराहार्यं यथाकथञ्चित्प्रयत्नेन निष्पाद्यम् । कीदृशम्—सौकुमार्यपरिस्पन्दस्यन्दि । सौकुमार्यमाभिजात्यं तस्य परिस्पन्दस्तद्विदाह्लादकारित्वलक्षणं रामणीयकं तेन स्यन्दते रसमयं सम्पद्यते यत्तथोक्तम् । यत्र विराजते शोभातिशयं पुष्णातीति सम्बन्धः । यथा

प्रवृत्ततापो दिवसोऽतिमात्र-
मत्यर्थमेव क्षणदा च तन्वी ।

(1) The MS B reads वैदग्ध्यं here ; but in the commentary the word वैचित्र्यं is explained.

उभौ विरोधक्रियया विभिन्नौ
जायापती सानुशयाविवास्ताम्[1] ॥ ७४ ॥

अत्र श्लेषच्छायाच्छुरितं कविशक्तिमात्रसमुल्लसितमलङ्करणमनाहार्यं कामपि कमनीयतां पुष्णाति। तथा च 'प्रवृत्ततापः' 'तन्वी' इति वाचकौ सुन्दरस्वभावमात्रसमर्पणपरत्वेन वर्तमानावर्थान्तरप्रतीत्यनुरोधपरत्वेन प्रवृत्तिं न सम्भन्येते, कविव्यक्तकौशलसमुल्लसितस्य पुनः प्रकारान्तरस्य प्रतीतावानुगुण्यमात्रेण तद्विदाह्लादकारितां प्रतिपद्येते। किं तत्प्रकारान्तरं नाम?—विरोधविभिन्नयोः शब्दयोरर्थान्तरप्रतीतिकारिणोरुपनिबन्धः। तथा चोपमेययोः सहानवस्थानलक्षणो विरोधः, स्वभावभेदलक्षणं च विभिन्नत्वम्। उपमानयोः पुनरीर्ष्याकलहलक्षणो विरोधः, कोपात् पृथगवस्थानलक्षणं विभिन्नत्वम्। 'अतिमात्रम्' 'अत्यर्थं' चेति विशेषणद्वितयं पक्षद्वयेऽपि सातिशयताप्रतीतिकारित्वेनातितरां रमणीयम्। श्लेषच्छायोल्लेखसम्पाद्याप्ययत्नघटितत्वेनात्र मनोहारिणी।

यश्च कीदृशः—अम्लानप्रतिभोद्भिन्ननवशब्दार्थबन्धुरः। अम्लाना यासावदोषोपहता प्राक्तनाद्यतनसंस्कारपरिपाकप्रौढा प्रतिभा काचिदेव कविशक्तिः, तत उद्भिन्नौ नूतनाङ्कुरन्यायेन स्वयमेव समुल्लसितौ, न पुनः कदर्थनाकृष्टौ नवौ प्रत्यग्रौ तद्विदाह्लादकारित्वसामर्थ्ययुक्तौ शब्दार्थावभिधानाभिधेयौ ताभ्यां बन्धुरो हृदयहारी। अन्यच्च कीदृशः—अयत्नविहितस्वल्पमनोहारिविभूषणः। अयत्नेनाक्लेशेन विहितं कृतं यत् स्वल्पं मनाङ्मात्रं मनोहारि हृदयाह्लादकं विभूषणमलङ्करणं यत्र स तथोक्तः। स्वल्प-शब्दोऽत्र प्रकरणाद्यपेक्षः, न वाक्यमात्रपरः। उदाहरणं यथा—

बालेन्दुवक्राण्यविकाशभावाद्
बभुः पलाशान्यतिलोहितानि।

(1) रघु० xvi, 45.

सद्यो वसन्तेन समागतानां
नखक्षतानीव वनस्थलीनाम्[1] ॥ ७५ ॥

अत्र 'बालेन्दुवक्राणि' 'अतिलोहितानि' 'सद्यो वसन्तेन समागतानाम्' इति पदानि सौकुमार्यात् स्वभाववर्णनामात्रपरत्वेनोपात्तान्यपि 'नखक्षतानीव' इत्यलङ्करणस्य मनोहारिणः क्लेशं विना स्वभावोक्तित्वेन योजनां भजमानानि चमत्कारितामापद्यन्ते ।

यश्चान्यच्च कीदृशः—भावस्वभावप्राधान्यन्यक्कृताहार्यकौशलः । भावाः पदार्थास्तेषां स्वभावस्तत्त्वं तस्य प्राधान्यं मुख्यभावस्तेन न्यक्कृतं तिरस्कृतमाहार्यं व्युत्पत्तिविहितं कौशलं नैपुण्यं यत्र स तथोक्तः । तदयमभिप्रायः—पदार्थपरमार्थमहिमैव कविशक्तिसमुन्मीलितः, तथाविधो यत्र विजृम्भते । येन विविधमपि व्युत्पत्तिविलसितं काव्यान्तरगतं तिरस्कारास्पदं सम्पद्यते । अत्रोदाहरणं रघुवंशे मृगयावर्णनपरं प्रकरणम्, यथा

तस्य स्तनप्रणयिभिर्मुहुरेणशावै-
र्व्याहन्यमानहरिणीगमनं पुरस्तात् ।
आविर्बभूव कुशगर्भमुखं मृगाणां
यूथं तदग्रसरगर्वितकृष्णसारम्[2] ॥ ७६ ॥

यथा च कुमारसम्भवे ( ३।३५ )

द्वन्द्वानि भावं क्रियया विवव्रुः ॥ ७७ ॥

इतःपरं प्राणिधर्मवर्णनम् । यथा

शृङ्गेण च स्पर्शनिमीलिताक्षीं
मृगीमकण्डूयत कृष्णसारः[3] ॥ ७८ ॥

---

(1) कुमार० iii, 29. (2) रघु ix, 55. (3) कुमार० iii, 36.

अन्यच्च कीदृशः—रसादिपरमार्थज्ञमनःसंवादसुन्दरः। रसाः शृङ्गारादयः। तदादिग्रहणेन रत्यादयोऽपि गृह्यन्ते। तेषां परमार्थः परमरहस्यं तज्जानन्तीति तज्ज्ञास्तद्विदस्तेषां मनःसंवादो हृदयसंवेदनं स्वानुभवगोचरतया प्रतिभासः, तेन सुन्दरः सुकुमारः सहृदयहृदयाह्लादकारी वाक्यस्योपनिबन्ध इत्यर्थः। अत्रोदाहरणानि रघौ[1] रावणं निहत्य पुष्पकेणागच्छतो रामस्य सीतायास्तद्विरहविधुरहृदयेन मयास्मिन्नस्मिन् समुद्देशे किमप्येवंविधं वैशसमनुभूतमिति वर्णयतः सर्वाण्येव वाक्यानि। यथा

पूर्वानुभूतं स्मरता च रात्रौ
कम्पोत्तरं भीरु तवोपगूढम्।
गुहाविसारीण्यतिवाहितानि
मया कथञ्चिद् घनगर्जितानि[2] ॥ ७९ ॥

अत्र रात्रिद्वयकरणस्यायमभिप्रायो यद् विभावादिरूपेण रसाङ्गभूताः शकुनिरुततरुसलिलकुसुमसमयप्रभृतयः पदार्थाः सातिशयस्वभाववर्णनप्राधान्येनैव रसाङ्गतां प्रतिपद्यन्ते। तद्व्यतिरिक्ताः सुरगन्धर्वप्रभृतयः सोत्कर्षचेतनायोगिनः शृङ्गारादिरसनिर्भरतया वर्ण्यमानाः सरसहृदयाह्लादकारितामायान्तीति कविभिरभ्युपगतम्। तथाविधमेव लक्ष्ये दृश्यते।

अन्यच्च कीदृशः—अविभावितसंस्थानरामणीयकरञ्जकः। अविभावितमनालोचितं संस्थानं संस्थितिर्यत्र तेन रामणीयकेन रमणीयत्वेन रञ्जकः सहृदयाह्लादकः। तेनायमर्थः—यदि तथाविधं कविकौशलमत्र सम्भवति तद् व्यपदेष्टुमियत्तया न कथञ्चिदपि पार्यते, केवलं सर्वातिशायितया चेतसि परिस्फुरति। यश्च कीदृशः—विधिवैदग्ध्यनिष्पन्ननिर्माणातिशयोपमः। विधिर्विधाता तस्य वैदग्ध्यं कौशलं

(१) रघु॰ canto xiii. (२) रघु॰ xiii, 28.

तेन निष्पन्नः परिसमाप्तो योऽसौ निर्माणातिशयः सुन्दरः सर्गोल्लेखो रमणीयरमणीलावण्यादिः स उपमा निदर्शनं यस्य स तथोक्तः। तेन विधातुरिव कवेः कौशलं यत्र विवेक्तुमशक्यम्। यथा

ज्याबन्धनिष्पन्दभुजेन यस्य
विनिःश्वसद्वक्त्रपरम्परेण।
कारागृहे निर्जितवासवेन
दशाननेनोषितमा प्रसादात्[1] ॥ ८० ॥

अत्र व्यपदेशप्रकारान्तरनिरपेक्षः कविशक्तिपरिणामः परं परिपाकमधिरूढः।

एतस्मिन् कुलके—प्रथमश्लोके प्राधान्येन शब्दालङ्करणयोः सौन्दर्यं प्रतिपादितम्। द्वितीये वर्णनीयस्य वस्तुनः सौकुमार्यम्, तृतीये प्रकारान्तरनिरपेक्षस्य सन्निवेशस्य सौकुमार्यम्, चतुर्थे वैचित्र्यमपि सौकुमार्याविसंवादि विधेयमित्युक्तम्। पञ्चमो विषयविषयिसौकुमार्यप्रतिपादनपरः।

एवं सुकुमाराभिधानस्य मार्गस्य लक्षणं विधाय तस्यैव गुणान् लक्षयति—

असमस्तमनोहारिपदविन्यासजीवितम्।
माधुर्यं सुकुमारस्य मार्गस्य प्रथमो गुणः ॥३०॥

असमस्तानि समासवर्जितानि मनोहारीणि हृदयाह्लादकानि श्रुतिरम्यत्वेनार्थरमणीयत्वेन च यानि पदानि सुप्तिङन्तानि तेषां विन्यासः सन्निवेशवैचित्र्यं जीवितं सर्वस्वं यस्य तत्तथोक्तं माधुर्यं नाम सुकुमारलक्षणस्य मार्गस्य प्रथमः प्रधानभूतो गुणः। असमस्तशब्दोऽत्र प्राचुर्यार्थः, न समासाभावनियमार्थः। उदाहरणं यथा

---

(2) रघु० vi, 40.

क्रीडारसेन रहसि स्मितपूर्वमिन्दो-
र्लेखां विकृष्य विनिबध्य च मूर्ध्नि गौर्या।
किं शोभिताहमनयेति शशाङ्कमौलेः
पृष्टस्य पातु परिचुम्बनमुत्तरं वः[1] ॥ ८१ ॥

अत्र पदानामसमस्तत्वं शब्दार्थरमणीयता विन्यासवैचित्र्यं च त्रितयमपि चकास्ति।

तदेवं माधुर्यमभिधाय प्रसादमभिधत्ते—

**अक्लेशव्यञ्जिताकूतं झगित्यर्थसमर्पणम्।**
**रसवक्रोक्तिविषयं यत्प्रसादः स कथ्यते ॥३१॥**

झगिति प्रथमतरमेवार्थसमर्पणं वस्तुप्रतिपादनम्। कीदृशम्—अक्लेशव्यञ्जिताकूतम् अकदर्थनाप्रकटिताभिप्रायम्। किंविषयम्—रसवक्रोक्तिविषयम्। रसाः शृङ्गारादयः, वक्रोक्तिः सकलालङ्कारसामान्यं विषयो गोचरो यस्य तत्तथोक्तम्। स एव प्रसादाख्यो गुणो कथ्यते भण्यते। अत्र पदानामसमस्तत्वं प्रसिद्धाभिधानत्वम् अव्यवहितसम्बन्धत्वं समाससद्भावेऽपि गमकसमासयुक्तता च परमार्थः। 'आकूत'-शब्दस्तात्पर्यविच्छित्तौ च वर्तते। उदाहरणं यथा

हिमव्यपायाद्विशदाधराणा-
मापाण्डुरीभूतमुखच्छवीनाम्।
स्वेदोद्गमः किम्पुरुषाङ्गनानां
चक्रे पदं पत्रविशेषकेषु[2] ॥ ८२ ॥

अत्रासमस्तत्वादि[3] सामग्री विद्यते। यदपि विविधपत्रविशेषकवैचित्र्यविहितं किमपि वदनसौन्दर्यं मुक्ताकणाकारस्वेदलवोपबृंहितं तदपि सुव्यक्तमेव। यथा वा

(1) The last two lines of this verse are quoted again below, ii 84.

(2) कुमार० iii, 33. (3) अत्र समत्वादि B.

अनेन सार्धं विहराम्बुराशे-
स्तीरेषु ताडीवनमर्मरेषु ।
द्वीपान्तरानीतलवङ्गपुष्पै-
रपाकृतस्वेदलवा मरुद्भिः[1] ॥ ८३ ॥

अलङ्कारव्यक्तिर्यथा

बालेन्दुवक्राणि[2] इति ॥ ८४ ॥

एवं प्रसादमभिधाय लावण्यं लक्षयति—

**वर्णविन्यासविच्छित्तिपदसन्धानसम्पदा ।**
**स्वल्पया बन्धसौन्दर्यं लावण्यमभिधीयते ॥३२॥**

बन्धो वाक्यविन्यासस्तस्य सौन्दर्यं रामणीयकं लावण्यमभिधीयते लावण्यमित्युच्यते। कीदृशम्—वर्णानामक्षराणां विन्यासो विचित्रं न्यसनं तस्य विच्छित्तिः शोभा वैदग्ध्यभङ्गी तया लक्षितं पदानां सुप्तिङन्तानां सन्धानं संयोजनं तस्य सम्पत्, सापि शोभैव, तया लक्षितम्। कीदृश्या—उभयरूपयापि स्वल्पया मनाङ्मात्रया नातिनिर्बन्धनिर्मितया। तदयमत्रार्थः—शब्दार्थसौकुमार्यसुभगः सन्निवेशमहिमा लावण्याख्यो गुणः कथ्यते। यथा—

स्नानार्द्रमुक्तेष्वनुधूपवासं
विन्यस्तसायन्तनमल्लिकेषु ।
कामो वसन्तात्ययमन्दवीर्यः
केशेषु लेभे बलमङ्गनानाम्[3] ॥ ८५ ॥

अत्र सन्निवेशसौन्दर्यमहिमा सहृदयसंवेद्यो न व्यपदेष्टुं पार्यते। यथा वा

(1) रघु० vi, 53. (2) Already quoted above p. 49. (3) रघु० xvi, 50 ॥ शार्ङ्गधरपद्धति no. 3289.

चकार बाणैरसुराङ्गनानां

गण्डस्थलीः प्रोषितपत्रलेखाः[1] ॥ ८६ ॥

अत्रापि वर्णविन्यासविच्छित्तिः पदसन्धानसम्पच्च सन्निवेशसौन्दर्यनिबन्धनस्फुटावभासैव ।

एवं लावण्यमभिधाय आभिजात्यमभिधत्ते—

**श्रुतिपेशलताशालि सुस्पर्शमिव चेतसा ।**

**स्वभावमसृणच्छायमाभिजात्यं प्रचक्षते ॥ ३३ ॥**

एवंविधं वस्तु आभिजात्यं प्रचक्षते आभिजात्याभिधानं गुणं वर्णयन्ति । श्रुतिः श्रवणेन्द्रियं तत्र पेशलता रामणीयकं तेन शालते श्लाघते यत्तथोक्तम् । सुस्पर्शमिव चेतसा मनसा सुस्पर्शमिव । सुखेन स्पृश्यत इवेत्यतिशयोक्तिरियम् । यस्मादुभयमपि स्पर्शयोग्यत्वे सति सौकुमार्यात् किमपि चेतसि स्पर्शसुखमर्पयतीव । यतः स्वभावमसृणच्छायम् अहार्यश्लक्ष्णकान्ति यत्तद् आभिजात्यं कथयन्तीत्यर्थः । यथा

ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी ।

पुत्रप्रीत्या कुवलयदलप्रापि कर्णे करोति[2] ॥ ८७ ॥

अत्र श्रुतिपेशलतादि स्वभावमसृणच्छायत्वं किमपि सहृदयसंवेद्यं परिस्फुरति ।

ननु च लावण्यमाभिजात्यं च लोकोत्तरतरुणीरूपलक्षणवस्तुधर्मतया यत् प्रसिद्धं तत् कथं काव्यस्य भवितुमर्हतीति चेत्तन्न । यस्मादनेन न्यायेन पूर्वप्रसिद्धयोरपि माधुर्यप्रसादयोः काव्यधर्मत्वं विघटते । माधुर्यं हि गुडादिमधुरद्रव्यधर्मतया प्रसिद्धं तथाविधाह्लादकारित्वसामान्योपचारात् काव्ये व्यपदिश्यते । तथैव च प्रसादः स्वच्छसलिलस्फटिकादिधर्मतया प्रसिद्धः स्फुटावभासित्वसामान्योपचाराज् झगिति-

(1) रघु० vi, 72. (2) मेघदूत 44.

प्रतीतिपेशलतां प्रतिपद्यते। तद्वदेव च काव्ये कविशक्तिकौशलोल्लिखितकान्तिकमनीयं बन्धसौन्दर्यं चेतनचमत्कारकारित्वसामान्योपचाराल्लावण्यशब्दव्यतिरेकेण शब्दान्तराभिधेयतां नोत्सहते। तथैव च काव्ये स्वभावमसृणच्छायत्वमाभिजात्यशब्देनाभिधीयते।

ननु च केश्चित्प्रतीयमानं वस्तु ललनालावण्यसाम्याल्लावण्यमित्युत्पादितप्रतीति—

प्रतीयमानं पुनरन्यदेव
वस्त्वस्ति वाणीषु महाकवीनाम्।
यत्तत्प्रसिद्धावयवातिरिक्त-
माभाति लावण्यमिवाङ्गनासु[1] ॥ ८८ ॥

तत्कथं बन्धसौन्दर्यमात्रं लावण्यमित्यभिधीयते ? नैष दोषः, यस्मादनेन दृष्टान्तेन वाच्यवाचकलक्षणप्रसिद्धावयवव्यतिरिक्तत्वेनास्तित्वमात्रं साध्यते प्रतीयमानस्य, न पुनः सकललोकलोचनसंवेद्यस्य ललनालावण्यस्य। सहृदयहृदयानामेव संवेद्यं सत् प्रतीयमानं समीकर्तुं पार्यते। तस्य बन्धसौन्दर्यमेवाव्युत्पन्नपदपदार्थानामपि श्रवणमात्रेणैव हृदयहारित्वस्पर्धया व्यपदिश्यते। प्रतीयमानं पुनः काव्यपरमार्थज्ञानामेवानुभवगोचरतां प्रतिपद्यते। यथा कामिनीनां किमपि सौभाग्यं तदुपभोगोचितानां नायकानामेव संवेद्यतामर्हति, लावण्यं पुनस्तासामिव सत्कविगिरामिव सौन्दर्यं सकललोकगोचरतामायातीत्युक्तमेवेत्यलमतिप्रसङ्गेन।

एवं सुकुमारस्य लक्षणमभिधाय विचित्रं लक्षयति—

**प्रतिभाप्रथमोद्भेदसमये यत्र वक्रता।**
**शब्दाभिधेययोरन्तः स्फुरतीव विभाव्यते ॥३४॥**

(1) ध्वन्यालोक i, 4.

अलङ्कारस्य कवयो यत्रालङ्करणान्तरम् ।
असन्तुष्टा निबध्नन्ति हारादेर्मणिबन्धवत् ॥३५॥
रत्नरश्मिच्छटोत्सेकभासुरैर्भूषणैर्यथा ।
कान्ताशरीरमाच्छाद्य भूषायै परिकल्प्यते ॥३६॥
यत्र तद्वदलङ्कारैर्भ्राजमानैर्निजात्मना ।
स्वशोभातिशयान्तःस्थमलङ्कार्यं प्रकाश्यते ॥३७॥
यदप्यनूतनोल्लेखं वस्तु यत्र तदप्यलम् ।
उक्तिवैचित्र्यमात्रेण काष्ठां कामपि नीयते ॥३८॥
यत्रान्यथाभवत् सर्वमन्यथैव यथारुचि ।
भाव्यते प्रतिभोल्लेखमहत्त्वेन महाकवेः ॥३९॥
प्रतीयमानता यत्र वाक्यार्थस्य निबध्यते ।
वाच्यवाचकवृत्तिभ्यां व्यतिरिक्तस्य कस्यचित् ॥४०॥
स्वभावः सरसाकूतो भावानां यत्र बध्यते ।
केनापि कमनीयेन वैचित्र्येणोपबृंहितः ॥४१॥
विचित्रो यत्र वक्रोक्तिवैचित्र्यं जीवितायते[1] ।
परिस्फुरति यस्यान्तः सा काप्यतिशयाभिधा ॥४२॥
सोऽतिदुःसञ्चरो येन विदग्धकवयो गताः ।
खड्गधारापथेनेव सुभटानां मनोरथाः ॥४३॥

---

(1) Jayaratha (p. 8) quotes this line in connexion with his exposition of the वक्रोक्तिजीवितकार's views.

स विचित्राभिधानः पन्था कीदृक्—अतिदुःसञ्चरः, यत्रातिदुःखेन सञ्चरते। किं बहुना, येन विदग्धकवयः केचिदेव व्युत्पन्नाः केवलं गताः प्रयाताः, तदाश्रयेण काव्यानि चक्रुरित्यर्थः। कथम्—खड्गधारापथेनेव सुभटानां मनोरथाः। निस्त्रिंशधारामार्गेण यथा सुभटानां महावीराणां मनोरथाः सङ्कल्पविशेषाः। तदयमत्राभिप्रायः—यदसिधारामार्गगमने मनोरथानामौचित्यानुसारेण यथारुचि प्रवर्तमानानां मनाङ्मात्रमपि म्लानता न सम्भाव्यते। साक्षात्समरसम्मर्दसमाचरणे पुनः कदाचित् किमपि म्लानत्वमपि सम्भाव्येत। तदनेन मार्गस्य दुर्गमत्वं तत्प्रस्थितानां च विहरणप्रौढिः प्रतिपाद्यते। कीदृक् स मार्गः—यत्र यस्मिन् शब्दाभिधेययोरभिधानाभिधीयमानयोरन्तःस्वरूपानुप्रवेशिनो वक्रता भणितिविच्छित्तिः स्फुरतीव प्रस्पन्दमानेव विभाव्यते लक्ष्यते। कदा—प्रतिभाप्रथमोद्भेदसमये। प्रतिभायाः कविशक्तेरचरमोल्लेखावसरे। तदयमत्र परमार्थः—यत् कविप्रयत्ननिरपेक्षयोरेव शब्दार्थयोः स्वाभाविकः कोऽपि वक्रताप्रकारः परिस्फुरन् परिदृश्यते। यथा

कोऽयं भाति प्रकारस्तव पवन पदं लोकपादाहतीनां
तेजस्विव्रातसेव्ये नभसि नयसि यत्पांसुपूरं प्रतिष्ठाम्।
यस्मिन्नुत्थाप्यमाने जननयनपथोपद्रवस्तावदास्तां
केनोपायेन सह्यो वपुषि कलुषतादोष एष त्वयैव[1] ॥८८॥

अत्राप्रस्तुतप्रशंसालक्षणोऽलङ्कारः प्राधान्येन वाक्यार्थः। प्रतीयमानपदार्थान्तरत्वेन प्रयुक्तत्वात्तत्र विचित्रकविशक्तिसमुल्लिखितवक्रशब्दार्थोपनिबन्धमाहात्म्यात् प्रतीयमानमप्यभिधेयतामिव प्रापितम्। प्रक्रम एव प्रतिभासमानत्वान्न चार्थान्तरप्रतीतिकारित्वेऽपि पदानां श्लेषव्यपदेशः शक्यते कर्तुम्, वाच्यस्य समप्रधानभावेनानवस्थानात्। अर्था-

---

(१) सुभाषितावली no. १०३२ ( भागवतामृतदत्तस्य ).

न्तरप्रतीतिकारित्वं च प्रतीयमानार्थस्फुटत्वावभासनार्थमुपनिबध्यमानमतीवचमत्कारकारितां प्रतिपद्यते।

तमेव विचित्रं प्रकारान्तरेण लक्षयति—अलङ्कारस्येत्यादि। यत्र यस्मिन्मार्गे कवयो निबध्नन्ति विरचयन्ति, अलङ्कारस्य विभूषणस्यालङ्करणान्तरं विभूषणान्तरम् असन्तुष्टाः सन्तः। कथम्—हारादेर्मणिबन्धवत्। मुक्ताकलापप्रभृतेर्यथा पदकादिमणिबन्धं रत्नविशेषविन्यासं वैकटिकाः। यथा

हे हेलाजितबोधिसत्त्व वचसां किं विस्तरैस्तोयधे
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः।
तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशो-
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः[1]॥ ९० ॥

अत्रात्यन्तगर्हणीयचरितं पदार्थान्तरं प्रतीयमानतया चेतसि निधाय तथाविधविलसितः सलिलनिधिर्वाच्यतयोपक्रान्तः। तदेतावदेवालङ्कृतेरप्रस्तुतप्रशंसायाः[2] स्वरूपम्—गर्हणीयप्रतीयमानपदार्थान्तरपर्यवसानमपि वाक्यं [व]स्तुन्युपक्रमरमणीयतयोपनिबध्यमानं तद्विदाह्लादकारितामायाति। तदेतद् व्याजस्तुतिप्रतिरूपकप्रायमलङ्करणान्तरमप्रस्तुतप्रशंसाया भूषणत्वेनोपात्तम्। न चात्र सङ्करालङ्कारव्यवहारो भवितुमर्हति[3], पृथगतिपरिस्फुटत्वेनावभासनात्। न चापि संसृष्टिसम्भवः समप्रधानभावेनानवस्थितेः। न च द्वयोरपि वाच्यालङ्कारत्वम्, विभिन्नविषयत्वात्। यथा वा

नामाप्यन्यतरोर्निमीलितमभूत्तत्तावदुन्मीलितं
प्रस्थाने स्खलतः स्ववर्त्मनि विधेरन्यद्गृहीतः करः।

---

(1) Quoted anonymously in काव्यप्रकाश x, p. 671 = पुञ्जराज on वाक्यपदीय (ii, 249) = Hemacandra (com.), p. 28 (anon) = Ruyyaka p. 113.
(2) ०प्रशंसयोः B. (3) ०मर्हतीति B.

लोकश्लाघ्यमदृष्टदर्शनकृता[1] दृग्वैशसाद्दुःखितो
युक्तं कार्तिक लूनवान् यदसि तामाम्रालिमाकालिकीम्[2] ॥८१॥

अत्रायमेव न्यायोऽनुसन्धेयः। यथा च

किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा वल्लरी
लीलाप्रोच्छलितस्य किं लहरिका लावण्यवारांनिधेः।
उद्गाढोत्कलिकावतां स्वसमयोपन्यासविस्रम्भिणः
किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः[3] ॥ ८२ ॥

अत्र रूपकलक्षणो योऽयं[4] वाक्यालङ्कारः, तस्य सन्देहोक्तिरियं छायान्तरातिशयोत्पादनायोपनिबद्धा चेतनचमत्कारितामावहति। शिष्टं पूर्वोदाहरणद्वयोक्तमनुसर्तव्यम्।

अन्यच्च कीदृक्—रत्नेत्यादि। युगलकम्। यत्र यस्मिन्नलङ्कारैर्भ्राजमानैर्निजात्मना स्वजीवितेन भासमानैर्भूषायै परिकल्प्यते-शोभायैर्भूष्यते। कथम्—यथा भूषणैः, कङ्कणादिभिः। कीदृशैः—रत्नरश्मिच्छटोत्सेकभासुरैः मणिमयूखोल्लासभ्राजिष्णुभिः। किं कृत्वा—कान्ताशरीरमाच्छाद्य कामिनीवपुः स्वप्रभाप्रसरतिरोहितं विधाय। भूषायै कल्प्यते तद्वदेवालङ्करणैरुपमादिभिर्यत्र कल्प्यते। एतच्चैतेषां भूषायै कल्पनम्—यदेतैः स्वशोभातिशयान्तःस्थं निजकान्तिकमनीयान्तर्गतमलङ्कार्यम[5]लङ्करणीयं प्रकाश्यते द्योत्यते। तदिदमत्र तात्पर्यम्—तदलङ्कारमहिमैव तथाविधो[6]ऽत्र भ्राजते, तस्यात्यन्तोद्रिक्तवृत्तेः स्वशोभातिशयान्तर्गतमलङ्कार्यं प्रकाश्यते[7]। यथा

---

(1) ०कृता B. (2) ०मामाखिकामालिकीम् B. भल्लटशतक 86=सुभाषितावली no. 1017. (3) सुभाषितावली 1471 (बन्धोः)=anonymous in Ruyyaka p. 43. (4) ०लक्षणयोरयं B. (5) The whole passage from प्रतिभासते on p. 43, line 1, up to this word (inclusive) is dropped entirely in A. The above text is given by B alone. (6) तादृशो A. (7) प्रकाशते B.

आर्यस्याजिमहोत्सवव्यतिकरे नासंविभक्तोऽत्र वः
कश्चित् क्वाप्यवशिष्यते त्यजत रे नक्तंचराः संभ्रमम्।
भूयिष्ठेष्वपि का भवत्सु[1] गणनात्यर्थं[2] किमुत्ताम्यते
तस्योदारभुजोष्मणोऽनवसिता नाचारसम्पत्तयः ॥८३॥

अत्राजिमहोत्सवव्यतिकरत्वेन तथाविधं रूपणं विहितं[3] यत्रालङ्कार्यम् "आर्यः स्वशौर्येण युष्मान् सर्वानेव मारयति" इत्यलङ्कारशोभातिशयान्तर्गतत्वेन भ्राजते। तथा च कश्चित् सामान्योऽपि क्वापि दवीयस्यपि[4] देशे नासंविभक्तो युष्माकमवशिष्यते। तस्मात् समरमहोत्सवसंविभागलम्पटतया प्रत्येकं यूयं सम्भ्रमं त्यजत। गणनया वयं भूयिष्ठा इत्य[5]शक्यानुष्ठानतां यदि मन्यध्वे तदप्ययुक्तम्। यस्मादसंख्यसंविभागाशक्यता[6] कदाचिदसम्पत्त्या कार्पण्येन वा सम्भाव्यते, तदेतदुभयमपि नास्तीत्युक्तम्—तस्योदारभुजोष्मणोऽनवसिता नाचारसम्पत्तयः [इति]। यथा च

कतमः प्रविजृम्भितविरहव्यथः शून्यतां नीतो देशः[7] ॥८४॥

इति। यथा च

कानि च[8] पुण्यभाञ्जि भजन्त्यभिख्यामक्षराणि[9]॥८५॥

इति। अत्र कस्मादागताः स्थ, किं चास्य नाम इत्यलङ्कार्यमप्रस्तुतप्रशंसालक्षणालङ्कारच्छायाच्छुरितत्वेनैतदीयशोभान्तर्गतत्वेन[10] सहृदयहृदयाह्लादकारितां प्रापितम्[11]। एतच्च व्याजस्तुतिपर्यायोक्तप्रभृतीनां भूयसा विभाव्यते। ननु च रूपकादीनां स्वलक्षणावसर एव स्वरूपं निर्णेष्यते तत् किं प्रयोजनमेतेषामिहोदाहरणस्य? सत्यमेतत्, किन्त्वेतदेव विचित्रस्य वैचित्र्यं नाम यदलौकिकच्छायातिशययोगित्वेन भूषणोपनिबन्धः कामपि वाक्यवक्रतामुन्मीलयति।

(1) का भव० lost in A. (2) गणना व्यर्थं A. (3) विहि० lost in A. (4) दवी० lost in A. (5) इत्य lost in A. (6) ०शक्तता A. (7) हर्षचरित १, प: ४०, ४१. (8) नः A. (9) हर्षचरिते, तत्रैव। (10) तदीयशोभान्तर्गतत्वेन wanting in B. (11) for आपन्नम् प्रापितम् in B.

विचित्रमेव रूपान्तरेण लक्षयति—यदपीत्यादि। यदपि वस्तु वाच्यमनूतनोल्लेखमनभिनवत्वेनोल्लिखितं तदपि यत्र यस्मिन्नलं कामपि काष्ठां नीयते लोकोत्तरातिशयकोटिमधिरोप्यते। कथम्[1]—उक्ति-वैचित्र्यमात्रेण, भणितिवैदग्ध्येनैवेत्यर्थः। यथा

अस्स' लडहत्तणअं अस्स च्चिअ काइ वत्तणच्छाआ।
सामा सामस्सपआवइणो रेह च्चिअ ण होइ[2] ॥ ९६॥

यथा वा

उद्देशोऽयं सरसकदलीश्रेणिशोभातिशायी[3]
कुञ्जोत्कर्षाङ्कुरितहरिणीविभ्रमो[4] नर्मदायाः।
किं चैतस्मिन् सुरतसुहृदस्तन्वि ते वान्ति वाता
येषामग्रे सरति कलिताकाण्डकोपो मनोभूः[5] ॥ ९७॥

भणितिवैचित्र्यमात्रमेवात्र काव्यार्थः, न तु नूतनोल्लेखशालि वाच्य-विजृम्भितम्। एतच्च भणितिवैचित्र्यं सहस्रप्रकारं सम्भवतीति स्वयमेवोत्प्रेक्षणीयम्।

पुनर्विचित्रमेव प्रकारान्तरेण लक्षयति—यत्रान्यथेत्यादि[6]। यत्र यस्मिन्नन्यथाभवदन्येन प्रकारेण सत् सर्वमेव पदार्थजातम् अन्यथैव प्रकारान्तरेणैव भाव्यते। कथम्—यथारुचि। स्वप्रतिभासानुरूपेणो-त्पाद्यते। केन—प्रतिभोल्लेखमहत्त्वेन महाकवेः, प्रतिभासोन्मेषाति-शयत्वेन सत्कवेः[7]। यत्किल वर्ण्यमानस्य वस्तुनः प्रस्तावसमुचितं किमपि सहृदयहृदयहारि रूपान्तरं निर्मिमीते कविः। यथा

---

(1) Omitted in A. (2) गाथासप्तशतक 969 = काव्यप्रकाश p. 630 (anon). = Ruyyaka p. 67 (anon). The छाया would be—

अन्यत्लटभत्वमन्येव च कापि वर्तनच्छाया।
श्यामा सामान्यप्रजापते रेखैव च न भवति॥

(3) विटपि for कदली in B. (4) रमणी for हरिणी in B. (5) काव्यप्रकाश p. 76 (anon). (6) यत्रेति A, (7) सत्क० lost in A.

ताप: स्वात्मनि संश्रितद्रुमलताशोषोऽध्वगैर्वर्जनं[1]
सख्यं[2] दु:समया त्वषा तव मरो कोऽसावनर्थो न य:[3] ।
एकोऽर्थस्तु महानयं जललवस्वाम्यस्मयोन्नर्जिन:
संनह्यन्ति न यत्तवोपकृतये[4] धाराधरा: प्राकृता:[5] ॥९८॥

यथा वा

विशति यदि नो कश्चित्कालं किलाम्बुनिधिं विधेः
कृतिषु सकलास्त्वेको लोके प्रकाशकतां गत: ।
कथमितरथा धाम्नां धाता तमांसि निशाकरं
स्फुरदिदमियत्ताराचक्रं प्रकाशयति[6] स्फुटम् ॥ ९९ ॥

अत्र जगद्गर्हितस्यापि मरो: कविप्रतिभोल्लिखितेन लोकोत्तरौदार्य-धुराधिरोपणेन[7] तादृक् स्वरूपान्तरमुन्मीलितं[8] यत्प्रतीयमानत्वेनो[9]-दारचरितस्य कस्यापि सत्स्वप्युचितपरिस्पन्दसुन्दरेषु पदार्थसहस्रेषु तदेव व्यपदेशपात्रतामर्हतीति तात्पर्यम् । अवयवार्थस्तु—दु:शमयेति 'त्वड्'-विशेषणेन प्रतीयमानस्य त्रैलोक्यराज्येनाप्यपरितोष: पर्यवस्यति । अध्वगैर्वर्जनमित्यौदार्येऽपि तस्य समुचितसंविभागासम्भवादर्थिभिर्लज्ज-मानैरिव स्वयमेवानभिसरणं प्रतीयते । संश्रितद्रुमलताशोष इति तदाश्रितानां तथाविधेऽपि सङ्कटे तदेकनिष्ठताप्रतिपत्ति: । तस्य च पूर्वोक्तस्वपरिकरपरितोषाक्षमतया ताप: स्वात्मनि, न भोगलवलौल्ये-नेति प्रतिपद्यते । उत्तरार्धेन—तादृशे दुर्विलसितेऽपि परोपकार-विषयत्वेन श्लाघास्पदत्वमुन्मीलितम् । अपरत्रापि विधिविहितसमु-चितसमयसम्भवं सलिलनिधिनिमज्जनं निजोदयन्यक्कृतनिखिलस्व-परपक्ष: प्रजापतिप्रणीतसकलपदार्थप्रकाशनव्रताभ्युपगमनिर्वहणाय

---

(1) शोषोऽ० lost in A. (2) सत्यं A. (3) ०वनर्थोदय: A. (4) न यत् lost in A. (5) सुभाषितावली no. 948 (ईश्वरसूनोर्लोटकस्य) (6) प्रकाशयतु B. (7) ०तराधिरोपणेन B. (8) ०न्तरमुत्पादितं A. (9) ०प्रतीयमानवृत्तेरुदार० A.

विवस्वान् स्वयमेव समाचरतीत्यन्यथा कदाचिदपि शशाङ्कतम[1]स्तारादीनामभिव्यक्तिर्मनागपि न सम्भवतीति कविनानूतनत्वेन यदुल्लिखितं तदतीवप्रतीयमानमहत्त्वव्यक्तिपरत्वेन चमत्कारकारितामापद्यते[2]।

विचित्रमेव प्रकारान्तरेणोन्मीलयति—प्रतीयमानतेत्यादि। यत्र यस्मिन् प्रतीयमानता गम्यमानता काव्यार्थस्य मुख्यतया विवक्षितस्य वस्तुनः कस्यचिदनाख्येयस्य[3] निबध्यते। कया युक्त्या[4]—वाच्यवाचकवृत्तिभ्यां शब्दार्थशक्तिभ्याम्[5]। व्यतिरिक्तस्य[6] तदतिरिक्तवृत्तेरन्यस्य व्यंग्यभूतस्याभिव्यक्तिः क्रियते। 'वृत्ति'-शब्दोऽत्र शब्दार्थयोस्तत्प्रकाशनसामर्थ्यमभिधत्ते। एष च 'प्रतीयमान'-व्यवहारो वाक्यवक्रताव्याख्यानावसरे सुतरां समुन्मील्यते। अनन्तरोक्तमुदाहरणद्वयमत्र योजनीयम्[7]।

यथा वा

वक्त्रेन्दोर्न[8] हरन्ति बाष्पपयसां धारा मनोज्ञां श्रियं
निश्वासा न कदर्थयन्ति मधुरां बिम्बाधरस्य द्युतिम्।
तस्यास्त्वद्विरहे विपक्वलवलीलावण्यसंवादिनो
च्छाया कापि[9] कपोलयोरनुदिनं तन्वयाः परं पुष्यति[10] ॥१००॥

अत्र त्वद्विरहवैधुर्यसंवरणकदर्थनामनुभवन्त्यास्तस्यास्तथाविधे महति गुरुसङ्कटे वर्तमानायाः—किं बहुना—बाष्प[11]निश्वासमोचावसरोऽपि न सम्भवति। केवलं परिणतलवलीलावण्यसंवादसुभगा कापि कपोलयोः कान्तिरशक्यसंवरणा प्रतिदिनं[12] परं परिपोषमासादयतीति वाच-

(1) ॰मत A. (2) प्रतिपद्यते for आपद्यते in A. (3) ॰नाख्येयवस्तुनो A. (4) वृत्त्या A. (5) omitted in A. (6) omitted in B. (7) प्रयोजनीयम् B. (8) वक्त्रेन्दो lost in A. (9) छाया कापि lost in A. (10) कवीन्द्रवचन॰ 275 (धर्मकीर्तेः) = सदुक्तिकर्णामृत ii, 141 (धर्मकीर्तेः) = सुभाषितावली p. 47 (introd.). (11) ना बाष्प lost in A. (12) ॰दिनं lost in A.

व्यतिरिक्तवृत्ति दूत्युक्तितात्पर्यं[1] प्रतीयते। उक्तप्रकारकान्तिमत्त्वकथनं च कान्तकौतुकोत्कलिकाकारणतां प्रतिपद्यते।

विचित्रमेव स्वरूपान्तरेण प्रतिपादयति—स्वभाव इत्यादि। यत्र यस्मिन् भावानां स्वभावः स्वपरिस्पन्दः सरसाकूतो[2] रसनिर्भराभिप्रायः पदार्थानां निबध्यते निवेश्यते। कीदृशः—केनापि कमनीयेन वैचित्र्येणोपबृंहितः, लोकोत्तरेण हृदयहारिणा वैदग्ध्येनोत्तेजितः। 'भाव'-शब्देनात्र सर्वपदार्थोऽभिधीयते, न रत्यादिरेव। उदाहरणम्

क्रीडासु बालकुसुमायुधसङ्गताया
यत्तत् स्मितं न खलु तत् स्मितमात्रमेव।
आलोक्यते स्मितपटान्तरितं मृगाक्ष्या-
स्तस्याः परिस्फुरदिवापरमेव किञ्चित् ॥१०१॥

अत्र न खलु तत् स्मितमात्रमेवेति प्रथमार्धेऽ[3]भिलाषसुभगं सरसाभिप्रायत्वमुक्तम्[4]। अपरार्धे तु[5]—हसितांशुकतिरोहितमन्यदेव[6] किमपि परिस्फुरदालोक्यत इति कमनीयवैचित्र्यविच्छित्तिः।

इदानीं विचित्रमेवोपसंहरति—विचित्रो यत्रेत्यादि। एवंविधो विचित्रो मार्गो[7] यत्र यस्मिन् वक्रोक्तिवैचित्र्यम् अलङ्कारविचित्रभावो जीवितायते जीवितवदाचरति। वैचित्र्यादेव विचित्रे 'विचित्र'-शब्दः[8] प्रवर्तते। तस्मात्तदेव तस्य जीवितम्। किं तद्वैचित्र्यं नामेत्याह—परिस्फुरति यस्यान्तः सा काप्यतिशयाभिधा। यस्यान्तः स्वरूपानुप्रवेशेन सा काप्यलौकिकातिशयोक्तिः परिस्फुरति भ्राजते। यथा—

---

(1) प्रत्युक्ति for दूत्युक्ति in A. (2) सरसाकूत A. (3) अर्धे omitted in A. In B, the last two lines of the verse are missing. After reading the first-half of the verse, it goes on इति प्रथमार्धे. (4) ०प्रायमुक्तम् A. (5) च A. (6) स्मितांशुक० A. (7) विचित्रः पन्थाः A. (8) विचित्रेऽपि चित्रशब्दः A.

यत्नेनारजसासुदञ्चति चये द्वाभ्यां दवीयोऽन्तरान्
पाणिभ्यां युगपद्विलोचनपुटानष्टाचमो रचितुम्।
एकैकं दलमुन्नमय्य गमयन् वासाम्बुजं कोशतां
धाता संवरणाकुलश्चिरमभूत् स्वाध्यायबद्धाननः[1] ॥१०२॥

एवं वैचित्र्यं सम्भावनानुमानप्रवृत्तायाः[2] प्रतीयमानत्वमुत्प्रेक्षायाः। तत्र धारा[3]धिरोहणरमणीयतयातिशयोक्तिपरिस्पन्दस्पन्दि संदृश्यते।

तदेवं वैचित्र्यं व्याख्याय तस्यैव गुणान् व्याचष्टे—

**वैदग्ध्यस्पन्दिमाधुर्यं पदानामत्र बध्यते।**
**याति यत्त्यक्तशैथिल्यं बन्धबन्धुरताङ्गताम् ॥४४॥**

अत्रास्मिन् माधुर्यं वैदग्ध्यस्पन्दि वैचित्र्यसमर्पकं पदानां बध्यते वाक्यैकदेशानां[4] निवेश्यते। यत्त्यक्तशैथिल्यमुज्झितकोमलभावं भवद्बन्धबन्धुरताङ्गतां याति सन्निवेशसौन्दर्योपकरणतां गच्छति। यथा

किं तारुण्यतरोः, इत्यत्र[5] पूर्वार्धे[6] ॥ १०३ ॥

एवं माधुर्यमभिधाय[7] प्रसादमभिधत्ते—

**असमस्तपदन्यासः प्रसिद्धः कविवर्त्मनि।**
**किञ्चिदोजः स्पृशन् प्रायः प्रसादोऽप्यत्र दृश्यते ॥४५॥**

असमस्तानां समासरहितानां[8] पदानां न्यासो निबन्धः कविवर्त्मनि विपश्चिन्मार्गे यः प्रसिद्धः प्रख्यातः सोऽप्यस्मिन् विचित्राख्ये प्रसादाभिधानो गुणः किञ्चित् कियन्मात्रमोजः[9] स्पृशन्नुत्तानतया व्यवस्थितः प्रायो दृश्यते प्राचुर्येण लक्ष्यते। बन्धसौन्दर्यनिबन्धनत्वात्। तथाविधस्यौजसः समासवती वृत्तिः 'ओजः'-शब्देन चिरन्तनैरुच्यते[10]।

(1) बालरामायण vii, 66 (p. 203). (2) सम्भावनानुप्रवृ० A. (3) धारा lost in A. (4) देशानां lost in A. (5) ०रोरित्यत्र lost in A. (6) See above p. 60. (7) ०मभिधा० lost in A. (8) ०सरहि० lost in A. (9) ०त् कियन्मा० lost in A. (10) दण्डी i, 80 ; वामन iii, i, 5.

तदयमत्र परमार्थः—पूर्वस्मिन् प्रसादलक्षणे सत्योजःसंस्पर्शमात्रमिह विधीयते। यथा

अपाङ्गगततारकाः स्तिमितपक्ष्मपालीभृतः
स्फुरत्सुभगकान्तयः स्मितसमुन्नतिद्योतिताः।
विलासभरमन्थरास्तरलकल्पितैकभ्रुवो[1]
जयन्ति रमणेऽर्पिताः[2] समदसुन्दरीदृष्टयः॥ १०४॥

प्रसादमेव प्रकारान्तरेण प्रकटयति—

**गमकानि निबध्यन्ते वाक्ये वाक्यान्तराण्यपि।**
**पदानीवात्र कोऽप्येष प्रसादस्यापरः क्रमः॥४६॥**

अत्रास्मिन् विचित्रे यद्वाक्यं पदसमुदायस्तस्मिन् गमकानि समर्पकाण्यन्यानि वाक्यान्तराणि निबध्यन्ते निवेश्यन्ते[3]। कथम्—पदानीव पदवत्, परस्परान्वितानीत्यर्थः[4]। एष[5] कोऽप्यपूर्वः प्रसादस्यापरः क्रमः बन्धच्छायाप्रकारः। यथा

नामाप्यन्यतरोः [6] इति॥ १०५॥

प्रसादमभिधाय लावण्यं लक्षयति—

**अत्रालुप्तविसर्गान्तैः पदैः प्रोतैः[7] परस्परम्।**
**ह्रस्वैः संयोगपूर्वैश्च लावण्यमतिरिच्यते॥४७॥**

अत्रास्मिन्नेवंविधैः पदैर्लावण्यमतिरिच्यते परिपोषं प्राप्नोति। कीदृशैः—परस्परमन्योन्यं प्रोतैः संश्लेषं नीतैः। अन्यच्च[8] कीदृशैः—अलुप्तविसर्गान्तैः, अलुप्तविसर्गाः[9] श्रूयमाणविसर्जनीया अन्ता येषां तानि तथोक्तानि तैः। ह्रस्वैश्च लघुभिः। संयोगेभ्यः[10] पूर्वैः। अतिरिच्यते

---

(1) मन्थराः सरल B. (2) रमणार्पिताः B. (3) omitted in B. (4) परस्परान्विताविल्यर्थः A. (5) अयं A. (6) See above p. 59. (7) प्रोक्तैः A. (8) अन्यथा A. (9) ०विसर्जनीयैः A. (10) संयोग only in A.

इति सम्बन्धः। तदिदमत्र तात्पर्यम्—पूर्वोक्तलक्षणं लावण्यं विद्य[1]-मानमनेनातिरिक्ततां[2] नीयते। यथा

श्वासोत्कम्पतरङ्गिणि स्तनतटे धौताञ्जनश्यामलाः
कीर्यन्ते कणशः कृशाङ्गि किममी बाष्पाम्भसां बिन्दवः।
किञ्चाकुञ्चितकण्ठरोधकुटिलाः कर्णामृतस्यन्दिनो
हुङ्काराः कलपञ्चमप्रणयिनस्त्रुट्यन्ति निर्यान्ति च[3] ॥१०६॥

यथा वा

एतन्मन्दविपक्वतिन्दुकफलश्यामोदरापाण्डुर-
प्रान्तं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं[4] लक्ष्यते।
तत् पल्लीपतिपुत्रि कुञ्जरकुलं कुम्भाभयाभ्यर्थना[5]-
दीनं त्वामनुनाथते कुचयुगं[6] पत्रांशुकैर्मा पिधाः[7] ॥१०७॥

यथा वा

हंसानाम् निनदेषु[8] इति ॥ १०८ ॥

एवं लावण्यमभिधायाभिजात्यमभिधीयते—

**यन्नातिकोमलच्छायं नातिकाठिन्यमुद्वहत्।**
**आभिजात्यं मनोहारि तदत्र प्रौढिनिर्मितम् ॥४८॥**

अत्रास्मिन् तदभिजात्यं यन्नातिकोमलच्छायं नात्यन्त[9]मसृणकान्ति नातिकाठिन्यमुद्वहन्नातिकठोरतां धारयत् तत् प्रौढिनिर्मितं सकल[10]-कविकौशलसम्पादितं सन्मनोहारि हृदयरञ्जकं भवतीत्यर्थः[11]। यथा

अधिकरतलतल्पं कल्पितस्वापलीला-
परिमलन[12]निमीलत्पाण्डिमा गण्डपाली।

(1) विद्योत A. (2) ॰मनेन व्यतिरिक्ततां A. (3) कवीन्द्रवचन॰ no. 450 (anon). See above p. 32. (4) कर lost in A. (5) ॰भयात्यर्थना B. (6) ॰नाथति स्तन॰ B. (7) सदुक्तिकर्णामृत ii, 376 (वल्लनस्य) = काव्यप्रकाश p. 269 (anon). (8) See above p. 44. A omits निनदेषु. (9) नात्यन्त lost in A. (10) सत् for सकल A. (11) भवती lost in A. (12) परिमिलन A.

सुतनु कथय कस्य व्यञ्जयत्यञ्जसैव
स्मरनरपतिकेलीयौवराज्याभिषेकम्[1] ॥ १०९ ॥

एवं सुकुमारविहितानामेव गुणानां विचित्रे कश्चिदतिशयः सम्पाद्यत इति बोद्धव्यम् ।

आभिजात्यप्रभृतयः पूर्वमार्गोदिता गुणाः ।
अत्रातिशयमायान्ति जनिताहार्य[2]सम्पदः ॥११०॥

इत्यन्तरश्लोकः[3] ।

एवं विचित्रमभिधाय मध्यममुपक्रमते[4]—

वैचित्र्यं सौकुमार्यञ्च यत्र सङ्कीर्णतां गते ।
भ्राजेते सहजाहार्यशोभातिशयशालिनी ॥४९॥
माधुर्यादिगुणग्रामो वृत्तिमाश्रित्य मध्यमाम् ।
यत्र कामपि पुष्णाति बन्धच्छायातिरिक्तताम् ॥५०॥
मार्गोऽसौ मध्यमो नाम नानारुचिमनोहरः ।
स्पर्धया यत्र वर्तन्ते मार्गद्वितयसम्पदः ॥५१॥
अत्रारोचकिनः केचिच्छायावैचित्र्यरञ्जके ।
विदग्धनेपथ्यविधौ भुजङ्गा इव सादराः[5] ॥५२॥

मार्गोऽसौ मध्यमो नाम मध्यमाभिधानोऽसौ पन्थाः । कीदृशः—नानाविधा रुचयः प्रतिभासा येषां ते तथोक्तास्तेषां[6] सुकुमारविचित्रमध्यमव्यसनिनां[7] सर्वेषामेव मनोहरो हृदयहारी । यस्मिन्

---

(1) ॰भिषेकम् lost in A. Quoted in काव्यप्रकाश p. 342. (2) ॰ताहार्यं A. (3) Omitted in B. (4) ॰मभिधीयते A. (5) This कारिका is omitted here in B, but given later. (6) तेषां omitted in A. (7) ॰स्थानिकानां for ॰व्यसनिनां in A.

सर्वथा मार्गद्वितयसम्पदः सुकुमारविचित्रशोभाः साम्येन वर्तन्ते व्यवतिष्ठन्ते, न न्यूनातिरिक्तत्वेन। यत्र वैचित्र्यं विचित्रत्वं सौकुमार्यं सुकुमारत्वं सङ्कीर्णतां गते तस्मिन् मिश्रतां प्राप्ते सती भ्राजेते शोभेते। कीदृशी[1]—सहजाहार्यशोभातिशयशालिनी, शक्तिव्युत्पत्तिसम्भवो यः[2] शोभातिशयः कान्त्युत्कर्षस्तेन शालेते श्लाघेते ये ते तथोक्ते।

माधुर्येत्यादि। यत्र च माधुर्यादिगुणग्रामो माधुर्यप्रभृतिगुणसमूहो मध्यमामुभयच्छायाच्छुरितां वृत्तिं स्वस्पन्दगतिमाश्रित्य काममप्यपूर्वां बन्धच्छायातिरिक्ततां सन्निवेशकान्त्यधिकतां पुष्णाति पुष्यतीत्यर्थः।

तत्र गुणानामुदाहरणानि। तत्र माधुर्यस्य यथा—

वेलानिलैर्मृदुभिराकुलितालकान्ता
गायन्ति यस्य चरितान्यपरान्तकान्ताः।
लीलानताः समवलम्ब्य लतास्तरूणां
हिन्तालमालिषु तटेषु महार्णवस्य[3] ॥ १११ ॥

प्रसादस्य यथा—

तद्वक्त्रेन्दुविलोकनेन[4] इत्यादि ॥ ११२ ॥

लावण्यस्य यथा—

संक्रान्ताङ्गुलिपर्वसूचितकरव्यापा कपोलस्थली
नेत्रे निर्भरमुक्तबाष्पकलुषे निश्वासतान्तोऽधरः।
बद्धोद्भेदविसंष्ठुलालकलता निर्वेदशून्यं मनः
कष्टं दुर्नयवेदिभिः कुसचिवैर्देवी दृढं खिद्यते[5] ॥११३॥

आभिजात्यस्य यथा—

आलम्ब्य लम्बाः सरसाग्रवल्लीः
पिबन्ति यस्य स्तनभारनम्राः।

(1) Omitted in A. (2) सम्भवोदयः B. (3) पादताडितकभाण, श्लो॰ 55. (4) See above p. 13. (5) तापसवत्सराज (Berlin Ms iii., 76b).

स्रोतस्सु तत्र शीकरकूणिताच्छो
मन्दाकिनीनिर्भरमख्खसुख्यः ॥ ११४ ॥

एवं मध्यमं व्याख्याय तमेवोपसंहरति—अत्रेति[1]। अत्रैतस्मिन् केचित् कतिपये सादरास्तदाश्रयेण काव्यानि कुर्वन्ति। यस्मात्[2] अरोचकिनः कमनीयवस्तुव्यसनिनः[3]। कीदृशे चास्मिन्—छाया-वैचित्र्यरञ्जके कान्तिविचित्रभावाह्लादके। कथम्—विदग्धनेपथ्य-विधौ भुजङ्गा इव, अग्राम्याकल्पकल्पने नागरा यथा। सोऽपि छाया-वैचित्र्यरञ्जक एव।

अत्र गुणोदाहरणानि[4] परिमितत्वात्प्रदर्शितानि, प्रतिपदं पुन-श्छायावैचित्र्यं सहृदयैः स्वयमेवानुसर्तव्यम्[5]। अनुसरणदिक्प्रदर्शनं पुनः क्रियते। यथा—मातृगुप्त[6]मायुराज[7]मञ्जीरप्रभृतीनां सौकुमार्य-वैचित्र्य[8]संवलितपरिस्पन्दस्पन्दीनि काव्यानि सम्भवन्ति। तत्र मध्यममार्गसंवलितं[9] स्वरूपं विचारणीयम्। एवं सहजसौकुमार्य-सुभगानि[10] कालिदाससर्वसेनादीनां काव्यानि दृश्यन्ते। तत्र सु-कुमारमार्गस्वरूपं चर्चनीयम्। तथैव च विचित्रवक्रत्वविजृम्भितं हर्ष-चरिते[11] प्राचुर्येण भट्टबाणस्य विभाव्यते[12], भवभूतिराजशेखरविर-चितेषु बन्धसौन्दर्यसुभगेषु मुक्तकेषु परिदृश्यते। तस्मात् सहृदयैः सर्वत्र सर्वमनुसर्तव्यम्[13]। एवं मार्गत्रितयलक्षणं दिङ्मात्रमेव प्रदर्शितम्। न पुनः साकल्येन सत्कविकौशलप्रकाराणां केनचिदपि स्वरूपमभिधातुं पार्यते। मार्गेषु गुणानां समुदायधर्मता। यथा न केवलं शब्दादि-धर्मत्वं तथा तल्लक्षणव्याख्यानावसर एव प्रतिपादितम्।

---

(1) B here inserts कारिका 52. (2) कस्मात् A. (3) omitted in A. (4) ॰हरणा lost in A. (5) स्वयमनुवक्तव्यम् A. (6) मन्त्रिगुप्त B. (7) ॰युराज lost in A. (8) वैदग्ध्य for वैचित्र्य in B. (9) मार्गसम्भवि संवलितं B. (10) ॰र्यसुभगा॰ lost in A. (11) हर्षचर्ये A. (12) स्य and वि lost in A. (13) सम॰ for सर्वम॰ in A.

एवं प्रत्येकं प्रतिनियतगुणग्रामरमणीयं मार्गचितयं व्याख्याय साधारणगुणस्वरूपव्याख्यानार्थमाह—

आञ्जसेन स्वभावस्य महत्त्वं येन पोष्यते।
प्रकारेण तदौचित्यमुचिताख्यानजीवितम् ॥५३॥

तदौचित्यं नाम गुणः। कीदृक्—आञ्जसेन सुस्पष्टेन[1] स्वभावस्य पदार्थस्य महत्त्वमुत्कर्षो येन पोष्यते परिपोषं प्राप्यते[2]। प्रकारेणेति—प्रस्तुतत्वादभिधावैचित्र्यमत्र 'प्रकार'-शब्देनोच्यते। कीदृशम्—उचिताख्यानमुदाराभिधानं जीवितं परमार्थो यस्य तत्तथोक्तम्। एतदानुगुण्येनैव विभूषणविन्यासो विच्छित्तिमावहति। यथा

करतलकलिताक्षमालयोः
समुदितसाध्वससन्नहस्तयोः।
कृतरुचिरजटानिवेशयो-
रपर इवेश्वरयोः समागमः[3] ॥ ११५ ॥

यथा वा

उपगिरि पुरुहूतस्यैष सेनानिवेश-
स्तटमपरमितो[4]ऽद्रेस्त्वलाङ्घ्यावसन्तु।
ध्रुवमिह करिणस्ते दुर्धराः सन्निकर्षे
सुरगजमलेखासौरभं न क्षमन्ते ॥ ११६ ॥

यथा च

हे नागराज बहुधास्य नितम्बभागं
भोगेन गाढमभिवेष्टय मन्दराद्रेः।

---

(1) सुपुष्टेन A. (2) परिपोषं प्राप्यते omitted in A. (3) तापसवत्सराज Berlin Ms iii, 84b. The word समागमः repeated in B. (4) °परिमितो A.

सोढाविषह्यवृषवाहनयोगलीला-
पर्यङ्कबन्धनविधेस्तव कोऽतिभारः[1] ॥ ११७ ॥

अत्र पूर्वत्रोदाहरणयो[2]र्भूषणगुणेनैव तद्गुणपरिपोषः, इतरत्र च स्वभावौदार्याभिधानेन[3]।

औचित्यस्यैव च्छायान्तरेण स्वरूपमुन्मीलयति—

**यत्र वक्तुः प्रमातुर्वा वाच्यं शोभातिशायिना।**
**आच्छाद्यते स्वभावेन तदप्यौचित्यमुच्यते ॥५४॥**

यत्र यस्मिन् वक्तुरभिधातुः प्रमातुर्वा श्रोतुर्वा स्वभावेन स्वपरिस्पन्देन वाच्यमभिधेयं वस्तु शोभातिशायिना रामणीयकमनोहरेण आच्छाद्यते संव्रियते[4] तदप्यौचित्यमेवोच्यते। यथा

शरीरमात्रेण नरेन्द्र तिष्ठन्नाभासि तीर्थप्रतिपादितर्द्धिः।
आरण्यकोपात्तफलप्रसूतिः स्तम्बेन नीवार इवावशिष्टः[5] ॥११८॥

अत्र श्लाघ्यतया तथाविध[6]महाराजपरिस्पन्दे वर्ण्यमाने मुनिना स्वानुभवसिद्धव्यवहारानुसारेणालङ्करणयोजनमौचित्यपरिपोषमावहति। अत्र[7] वक्तुः स्वभावेन च वाच्यपरिस्पन्दः संवृतप्रायो लक्ष्यते। प्रमातुर्यथा

निपीयमानस्तवका शिलीमुखै[8]-
रशोकयष्टिश्चलबालपल्लवा।
विडम्बयन्ती ददृशे वधूजनै-
रमन्ददष्टौष्ठकरावधूननम्[9] ॥ ११९ ॥

---

(1) Quoted anonymously in काव्यमीमांसा p. 88 = सरस्वतीकण्ठाभरण p. 65 = Hemacandra, वृत्ति, p. 15. (2) पूर्वोदाहरणे B. (3) स्वौदार्याभिधानेन lost in A. (4) संभ्रियते B. (5) रघु॰ v, 15. (6) Omitted in A. (7) Omitted in B. (8) ॰का शिली॰ lost in A. (9) ॰रानन्ददष्टौ॰ A. किरात॰ viii, 6.

अत्र वधूजनैर्निजानुभववासनानुसारेण[1] तथाविधशोभाभिरामतानुभूतिरौचित्यपरिपोष[2]मावहति। यथा वा

वापीतडे कुडुंगा पिअसहि ह्वाउं गएहिं दीसंति।
ए धरंति करेए भएंति ए त्ति वलिउं पुए ए देंति[3] ॥१२०॥

अत्र कस्याश्चिन्नमाह्वभूतायाः सातिशयमौग्ध्यपरिस्पन्दसुन्दरेण स्वभावेन वाच्य[4]माच्छादितमौचित्यपरिपोषमावहति[5]।

एवमौचित्यमभिधाय सौभाग्यमभिधत्ते[6]—

इत्युपादेयवर्गेऽस्मिन् यदर्थं प्रतिभा कवेः।
सम्यक् संरभते तस्य गुणः सौभाग्यमुच्यते ॥५५॥

इत्येवंविधेऽस्मिन्नुपादेयवर्गे शब्दाद्युपेयसमूहे[7] यदर्थं यन्निमित्तं कवेः सम्बन्धिनी प्रतिभा शक्तिः सम्यक् सावधानतया संरभते व्यवस्यति तस्य वस्तुनः प्रस्तुतत्वात् काव्याभिधानस्य यो गुणः स सौभाग्यमित्युच्यते भण्यते।

तच्च न[8] प्रतिभासंरम्भमात्रसाध्यम्, किन्तु तद्विहितसमस्तसामग्रीसम्पाद्यमित्याह[9]—

सर्वसम्पत्परिस्पन्दसम्पाद्यं सरसात्मनाम्।
अलौकिकचमत्कारकारि काव्यैकजीवितम् ॥५६॥

सर्वसम्पत्परिस्पन्दसम्पाद्यं सर्वस्योपादेयराशेर्या सम्पत्तिरनवद्यताकाष्ठा तस्याः परिस्पन्दः स्फुरितत्वं तेन सम्पाद्यं निष्पादनीयम्।

---

(1) ०सारेण lost in A. (2) परिपोष omitted in B. (3) This verse is obscure in sense. B reads तावी० for वापी० : while in A the last line reads ए धरंति करेए भ·· लीलाप्पु ए ए देंत्ति। (4) वाल्य A. (5) B omits परिपोष। (6) ०मभिधीयते A. (7) उपादेय for उपेय in A. (8) Omitted in A. (9) A reads ०जन्य for ०सम्पाद्य ; B omits समस्त before सामग्री.

अन्यच्च कीदृशम्—सरसात्मनामार्द्रचेतसामलौकिकचमत्कारकारि लोकोत्तराह्लादविधायि। किं बहुना, तच्च काव्यैकजीवितं काव्यस्य परः परमार्थ इत्यर्थः[1]। यथा

दोर्मूलावधि[2]सूत्रितस्तनमुरः स्निह्यत्कटाक्षे दृशौ
किञ्चित्ताण्डवपण्डिते स्मितसुधासिक्तोक्तिषु भ्रूलते।
चेतः कन्दलितं स्मरव्यतिकरैर्लावण्यमङ्गैर्वृतं[3]
तन्वङ्ग्यास्तरुणिम्नि सर्पति शनैरन्यैव काचिल्लिपिः[4] ॥१२१॥

तन्व्याः[5] प्रथमतरतारुण्येऽवतीर्णे आकारस्य[6] चेतसश्चेष्टायाश्च वैचित्र्यमत्र[7] वर्णितम्। तत्र[8] सूत्रितस्तनमुरो लावण्यमङ्गैर्वृतमित्याकारस्य, स्मरव्यतिकरैः कन्दलितमिति चेतसः, स्निह्यत्कटाक्षे दृशाविति किञ्चित्ताण्डवपण्डिते स्मितसुधासिक्तोक्तिषु भ्रूलते इति चेष्टायाश्च। सूत्रित[9]-सिक्त-ताण्डव-पण्डित-कन्दलितानामुपचारवक्रत्वं लक्ष्यते, स्निह्यदित्येतस्य कालविशेषावेदकः[10] प्रत्ययवक्रभावः, अन्यैव काचिदवर्णनीयेति संवृतिवक्रताविच्छित्तिः, अङ्गैर्वृतमिति[11] कारकवक्रत्वम्। विचित्रमार्गविषयो लावण्यगुणातिरेकः। तदेवमेतस्मिन्[12] प्रतिभासंरम्भजनितसकलसामग्रीसमुन्मीलितं सरसहृदयाह्लादकारि किमपि सौभाग्यं समुद्भासते।

अनन्तरोक्तस्य गुणद्वयस्य विषयं प्रदर्शयति—

**एतत्त्रिष्वपि मार्गेषु गुणद्वितयमुज्ज्वलम्।**
**पदवाक्यप्रबन्धानां व्यापकत्वेन वर्तते ॥ ५७ ॥**

---

(1) Omitted in A. (2) ०मूलादधि A. (3) धृतं for वृतं in A. (4) Quoted by Hemacandra p. 302. B reads काचिद्युतिः। (5) तस्याः A. (6) ०तारुण्यावतीर्णमाकारस्य A. (7) एव for अत्र in A. (8) Omitted in B. (9) अधिसूत्रित A. (10) कालविच्छेदावशेषकः A. (11) धृतं for वृतं in A. (12) तदेतस्मिन् A.

एतद्गुणद्वितयमौचित्यसौभाग्याभिधानम् उज्ज्वलमतीवभ्राजिष्णु[1] पदवाक्यप्रबन्धानां त्रयाणामपि[2] व्यापकत्वेन वर्तते सकलावयवव्याप्त्यावतिष्ठते। क्वेत्याह—त्रिष्वपि मार्गेषु सुकुमारविचित्रमध्यमाख्येषु। तत्र पदस्य तावदौचित्यं बहुविधभेदभिन्नो वक्रभावः। स्वभावस्याञ्जसेन प्रकारेण परिपोषणमेव वक्रतायाः परं रहस्यम्[3]। उचिताभिधान[4]-जीवितत्वाद् वाक्यस्याप्येकदेशे[5]ऽप्यौचित्यविरहात्तद्विदाह्लादकारित्वहानिः। यथा रघुवंशे

पुरं निषादाधिपतेरिदं त-
द्यस्मिन्मया मौलिमणिं विहाय।
जटासु बद्धास्वरुदत्सुमन्त्रः
कैकेयि कामाः फलितास्तवेति[6] ॥ १२२ ॥

अत्र रघुपतेरनर्घमहापुरुषसम्पदुपेतत्वेन वर्ण्यमानस्य 'कैकेयि कामाः फलितास्तव' इत्येवंविधतुच्छतरपदार्थसंस्मरणं तदभिधानं चात्यन्त[7]-मनौचित्यमावहति। प्रबन्धस्यापि क्वचित्प्रकरणैकदेशेऽप्यौचित्यविरहादेकदेशदाहदूषितदग्धपटप्रायता प्रसज्यते। यथा—रघुवंशे एव[8] दिलीप-सिंह-संवादावसरे

अथैकधेनोरपराधचण्डा[9]-
द्गुरोः कृशानुप्रतिमाद्बिभेषि।
शक्योऽस्य मन्युर्भवतापि जेतुं
गाः कोटिशः स्पर्शयता घटोघ्नीः[10] ॥ १२३ ॥

इति सिंहस्याभिधातुमुचितमेव, राजोपहासपरत्वेनाभिधीयमानत्वात्।

---

(1) उज्ज्वलमतीवभ्राजिष्णु omitted in A. (2) त्रया० lost in A. (3) रहस्याभिधानम् A. (4) उचितवक्र A. (5) स्यप्येक lost in A. (6) रघु xiii, 59. (7) यत्तत् for च in A. (8) Omitted in A. (9) दण्डा B. (10) रघु ii, 49.

राज्ञः पुनरस्य[1] निजयशःपरिरक्षणपरत्वेन तृणवल्लघुवृत्तयः प्राणाः प्रतिभासन्ते। तस्यैतत्पूर्वपक्षोत्तरत्वेन

कथं च शक्यानुनयो महर्षि[2]-
र्विश्राणनादन्यपयस्विनीनाम्।
इमां तनूजां सुरभेरवेहि
रुद्रौजसा तु प्रहृतं त्वयास्याम्[3] ॥ १२४ ॥

इत्यन्यासां गवां तत्प्रतिवस्तुप्रदानयोग्यता यदि कदाचित्सम्भवति ततस्तस्य मुनेर्मम चोभयोरप्येतज्जीवितपरिरक्षणनैरपेक्ष्य[4]मुपपन्नमिति तात्पर्यपर्यवसानादत्यन्तमनौचित्ययुक्तेयमुक्तिः। यथा च कुमारसम्भवे त्रैलोक्याक्रान्तिप्रवणपराक्रमस्य तारकाख्यस्य रिपोर्जिगीषावसरे सुरपतिर्मन्मथेनाभिधीयते

कामैकपत्नीं व्रतदुःखशीलां
लोलं मनश्चारुतया प्रविष्टाम्।
नितम्बिनीमिच्छसि[5] मुक्तलज्जां
कण्ठे स्वयंग्राहनिषक्तबाहुम्[6] ॥ १२५ ॥

इत्यविनयानुष्ठाननिष्ठं त्रिविष्टपाधिपत्यप्रतिष्ठितस्यापि तथाविधाभिप्रायानुवर्तनपरत्वेनाभिधीयमानमनौचित्यमावहति। एतच्चैतस्यैव कवेः सहजसौकुमार्यमुद्रित[7]सूक्तिपरिस्पन्दसौन्दर्यस्य पर्यालोच्यते, न पुनरन्येषामाहार्यमात्रकाव्यकरणकौशलश्लाघिनाम्। सौभाग्यमपि पदवाक्यप्रकरणप्रबन्धानां प्रत्येकमनेकाकारकमनीय[8]कारणकलापकलितरामणीयकानां किमपि सहृदयहृदयसंवेद्यं काव्यैकजीवितम-

---

(1) पुनर्यस्य B. (2) शक्योऽनुनयी महर्षेः B. (3) रघु ii, 54. (4) परिरक्षणे-रत्यपेक्ष्य A. (5) विलम्बिनी० A. (6) कुमार iii, 7. (7) ०मुदित A. (8) रमणीय for कमनीय in A.

लौकिकचमत्कारकारि संवलितयानेकरसास्वादसुन्दरं[1] सकलावयवव्यापकत्वेन काव्यस्य गुणान्तरं परिस्फुरतीत्यलमतिप्रसङ्गेन।

इदानीमेतदुपसंहृत्यान्यदवतारयति—

मार्गाणां त्रितयं तदेतदसकृत्प्राप्तव्यपर्यंत्सुकैः
क्षुण्णं कैरपि यत्र कामपि भुवं प्राप्य प्रसिद्धिं गताः।
सर्वे स्वैरविहारहारि कवयो यास्यन्ति[2] येनाधुना
तस्मिन् कोऽपि स साधु सुन्दरपदन्यासक्रमः कथ्यते॥५८

मार्गाणां सुकुमारादीनामेतत्त्रितयं कैरपि महाकविभिरेव, न सामान्यैः[3], प्राप्तव्यपर्युत्सुकैः प्राप्योत्कण्ठितैरसकृत् बहुवारमभ्यासेन क्षुण्णं परिगमितम्। यत्र यस्मिन् मार्गत्रये कामपि भुवं प्राप्य प्रसिद्धिं गताः[4] लोकोत्तरां भूमिमासाद्य प्रतीतिं प्राप्ताः। इदानीं सर्वे कवयस्तस्मिन्मार्गत्रितये येन यास्यन्ति गमिष्यन्ति स्वैरविहारहारि स्वेच्छाविहरणरमणीयं स[5] कोऽपि अलौकिकः साधु शोभनं कृत्वा सुन्दरपदन्यासक्रमः कथ्यते सुभगसुप्तिङन्तसमर्पणपरिपाटीविन्यासो वर्ण्यते। मार्गस्वैरविहार-पद-प्रभृतयः शब्दाः श्लेषच्छायाविशिष्टत्वेन व्याख्येयाः।

इति श्रीराजानक[6]कुन्तकविरचिते[7]
वक्रोक्तिजीविते काव्यालङ्कारे
प्रथम उन्मेषः।

---

(1) A reads पानकरसा० for संवलितयानेकरसा०. (2) लास्यन्ति A. (3) ०रेव न सा० lost in A. (4) This word is lost in A. (5) Lost in A. (6) Omitted in B. (7) ०कुन्तलक० in A.

# द्वितीयोन्मेषः ।

सर्वत्रैव सामान्यलक्षणे विहिते विशेषलक्षणं विधातव्यमिति काव्यस्य "शब्दार्थौ सहितौ" इत्यादि (१।७) सामान्यलक्षणं विधाय तदवयवभूतयोः शब्दार्थयोः साहित्यस्य प्रथमोन्मेष एव विशेषलक्षणं विहितम्। इदानीं प्रथमोद्दिष्टस्य वर्णविन्यासवक्रत्वस्य विशेषलक्षणमुपक्रमते—

**एको द्वौ बहवो वर्णा बध्यमानाः पुनः पुनः ।**
**स्वल्पान्तरास्त्रिधा सोक्ता वर्णविन्यासवक्रता ॥१॥**

वर्णशब्दोऽत्र व्यञ्जनपर्यायः, तथा प्रसिद्धत्वात्। तेन सा वर्णविन्यासवक्रता व्यञ्जनविन्यसनविच्छित्तिः त्रिधा त्रिभिः प्रकारैरुक्ता वर्णिता। के पुनस्ते त्रयः प्रकाराः, इत्युच्यते[1]—एकः केवल एव, कदाचिद् द्वौ बहवो वा वर्णाः पुनः पुनर्बध्यमाना योज्यमानाः। कीदृशाः—स्वल्पान्तराः। स्वल्पं स्तोकमन्तरं व्यवधानं येषां ते तथोक्ताः। त एव त्रयः प्रकारा इत्युच्यन्ते। अत्र वीप्सया[2] पुनः पुनरित्ययोगव्यवच्छेदपरत्वेन नियमः, नान्ययोगव्यवच्छेदपरत्वेन। तस्मात्पुनः पुनर्बध्यमाना एव, न तु पुनः पुनरेव बध्यमाना इति। तत्रैकव्यञ्जननिबद्धोदाहरणं यथा

धम्मिल्लो विनिवेशिताल्पकुसुमः सौन्दर्यधुर्यं स्मितं
विन्यासो वचसां विदग्धमधुरः कण्ठे कलः पञ्चमः ।
लीलामन्थरतारके च नयने यातं विलासालसं
कोऽप्येवं हरिणीदृशः स्मरशरापातावदातः क्रमः ॥ १ ॥

---

(1) उच्यन्ते for इत्युच्यते in A, which omits the next two or three lines (from एकः to इत्युच्यते). (2) वीप्सायाः A.

एकस्य द्वयोर्बहूनां चोदाहरणं यथा

भग्नैलावल्लरीकास्तरलितकदलीस्तम्बताम्बूलजम्बू-
जम्बीरास्तालतालीसरलतरलतालासिका[1] यस्य जङ्घः।
वेल्लत्कल्लोलहेला बिसकलनजडाः कूलकच्छेषु सिन्धोः
सेनासीमन्तिनीनामनवरतरताभ्यासतान्तिं[2] समीराः ॥ २ ॥

एतामेव वक्रतां विच्छित्त्यन्तरेण विविनक्ति—

वर्गान्तयोगिनः स्पर्शा द्विरुक्तास्त-ल-नादयः।
शिष्टाश्च रादि[3]संयुक्ताः प्रस्तुतौचित्यशोभिनः ॥२॥

इयमपरा वर्णविन्यासवक्रता त्रिधा त्रिभिः प्रकारैरुक्तेति 'च'-शब्देनाभिसम्बन्धः। के पुनरस्यास्त्रयः प्रकारा इत्याह—वर्गान्तयोगिनः स्पर्शाः। स्पर्शाः[4] कादयो मकारपर्यन्ता वर्गास्तदन्तैः[5] ङकारादिभिर्योगः संयोगो येषां ते तथोक्ताः, पुनः पुनर्बध्यमानाः,—प्रथमः प्रकारः। त-ल-नादयः तकार-लकार-नकार-प्रभृतयो द्विरुक्ता द्विरुच्चारिता द्विगुणाः सन्तः, पुनः पुनर्बध्यमानाः,—द्वितीयः। तद्व्यतिरिक्ताः शिष्टाश्च व्यञ्जनसंज्ञा ये वर्णास्ते रेफप्रभृतिभिः[6] संयुक्ताः, पुनः पुनर्बध्यमानाः—तृतीयः। स्वल्पान्तराः परिमितव्यवहिता इति सर्वेषामभिसम्बन्धः[7]। ते च कीदृशाः—प्रस्तुतौचित्यशोभिनः। प्रस्तुतं वर्ण्यमानं वस्तु तस्य यदौचित्यमुचितभावस्तेन शोभन्ते ये ते तथोक्ताः। न पुनर्वर्णसावर्ण्यव्यसनितामात्रेणोपनिबद्धाः प्रस्तुतौचित्यम्लानकारिणः[8]। प्रस्तुतौचित्यशोभित्वात् कुत्रचित्परुषरसप्रस्तावे[9] तादृशानेवाभ्यनुजानाति।

अथ प्रथमप्रकारोदाहरणं यथा

---

(1) ०तरलतरलता० A ; ०लासका B. (2) तन्द्रीं for तान्तिं in A. (3) रेफादिभिश्च संयुक्ताः A. (4) Omitted in B. (5) वर्गान्तैः only in A. (6) प्रभृतिभिः lost in A. (7) ०भिसम्बध्यते B. (8) ०रिणः lost in A. (9) रस omitted in A.

उन्निद्रकोकनदरेणुपिशङ्गिताङ्गा
गुञ्जन्ति मञ्जु मधुपाः कमलाकरेषु ।
एतच्चकास्ति च रवेर्नवबन्धुजीव-
पुष्पच्छदा[1]भमुदयाचलचुम्बिबिम्बम्[2] ॥ ३ ॥

यथा च

कदलीस्तम्बताम्बूलजम्बूजम्बीराः[3] इति ॥ ४ ॥

यथा वा

सरस्वतीहृदयारविन्दमकरन्दबिन्दुसन्दोहसुन्दराणाम्[4] इति ॥ ५ ॥

द्वितीयप्रकारोदाहरणं

प्रथममरुणच्छायः[5] ॥ ६ ॥

वृत्तस्य द्वितीयचतुर्थौ पादौ । तृतीयप्रकारोदाहरणमस्यैव तृतीयः पादः । यथा वा

सौन्दर्यधुर्यं स्मितम्[6] ॥ ७ ॥

यथा च 'कह्लार'-शब्दसाहचर्येण 'ह्लाद'-शब्दप्रयोगः । परुषरस[7]प्रस्तावे तथाविधसंयोगोदाहरणं यथा

उत्ताम्यत्तालवश्च[8] प्रतपति तरणावांशवीं तापतन्द्री-
मद्रिद्रोणीकुटीरे कुहरिणि हरिणारातयो यापयन्ति[9] ॥ ८ ॥

एतामेव वैचित्र्यान्तरेण[10] व्याचष्टे—

क्वचिदव्यवधानेऽपि मनोहारिनिबन्धना ।
सा स्वराणामसारूप्यात् परां पुष्णाति वक्रताम् ॥३॥

(1) ०च्छटा० A. (2) शार्ङ्गधरपद्धति no. 3736 (anon)=काव्यप्रकाश p. 192 (anon). (3) See above p. 80 (4) See above p. 62, l. 19. (5) See above p. 30. (6) See above p. 79. (7) रस omitted in A. (8) ०तालपत्रं A. (9) हरिणा रातयो पाययन्ति in A. कवीन्द्रवचन० no. 93 (anon), where the readings are corrupt. (10) एतस्यैव वैचित्र्यान्तरं A.

क्वचिदनियतप्रायवाक्यैकदेशे कस्मिंश्चिदव्यवधानेऽपि व्यवधानाभावे[1]ऽप्येकस्य द्वयोः समुदितयोश्च बहूनां वा पुनः पुनर्बध्यमानानामेषां मनोहारिनिबन्धना हृदयावर्जकविन्यासा भवति। काचिदेवं सम्पद्यत इत्यर्थः। यमकव्यवहारोऽत्र न प्रवर्तते[2], तस्य नियतस्थानतया व्यवस्थानात्। स्वरैरव्यवधानमत्र न विवक्षितम्, तस्यानुपपत्तेः। तत्रैकस्याव्यवधानोदाहरणं यथा

वामं कज्जलवद्विलोचनमुरो रोहद्विसारिस्तनम्[3] ॥ ९ ॥

द्वयोर्यथा

ताम्बूलीनद्धमुग्धक्रमुकतरुतलस्रस्तरे[4] सानुगाभिः
पायं पायं कलाचीकृतकदलदलं नारिकेलीफलाम्भः।
सेव्यन्तां व्योमयात्राश्रमजलजयिनः सैन्यसीमन्तिनीभि-
र्दात्यूहव्यूहकेलीकलितकुहकुहारावकान्ता वनान्ताः[5] ॥१०॥

यथा वा

अयि पिबत चकोराः कृत्स्नमुन्नाम्य कण्ठान्
क्रमुकबलनचञ्चच्चञ्चवश्चन्द्रिकाम्भः।
विरहविधुरितानां जीवितत्राणहेतो-
र्भवति हरिणलक्ष्मा येन तेजोदरिद्रः[6] ॥ ११ ॥

बहूनां यथा

सरलतरलतालासिका[7] इति ॥ १२ ॥

'अपि'-शब्दात् क्वचिद् व्यवधानेऽपि। द्वयोर्यथा

स्वस्थाः सन्तु वसन्त ते रतिपतेरग्रेसरा वासराः ॥ १३ ॥

---

(1) कस्मिंश्चिदव्यवधानाभावे B. (2) वर्तते B. (3) See above p. 31. (4) ०तरुलताप्रस्तरे A. (5) बालरामायण i, 63 (p. 28) = quoted in सुभाषितरत्न ii, 41. (6) बालरामायण v, 73 (p. 143) = विद्धशालभञ्जिका iii, 15 = कवीन्द्रवचन० no. 493. (7) See above p. 80. The same readings here as there.

बहूनां व्यवधानेऽपि यथा

चकितचातकमेचकितवियति वर्षात्यये ॥ १४ ॥

मा स्वराणामसारूप्यात् सेयमनन्तरोक्ता स्वरानामकारादीनाम-सारूप्यादसादृश्यात् क्वचित्कस्मिंश्चिदावर्तमानसमुदायैकदेशे परामन्यां वक्रतां कामपि पुष्णाति पुष्यतीत्यर्थः[1] । यथा

राजीवजीवितेश्वरे ॥ १५ ॥

यथा वा

धूसरसरिति इति ॥ १६ ॥

यथा च[2]

स्वस्थाः सन्तु वसन्त इति[3] ॥ १७ ॥

यथा वा

तालतालो इति[4] ॥ १८ ॥

सोऽयमुभयप्रकारोऽपि वर्णविन्यासवक्रताविशिष्टवाक्यविन्यासो[5] यमकाभासः सन्निवेशविशेषो[6] मुक्ताकलापमध्यप्रोतमणिमयपदकबन्धबन्धुरः सुतरां सहृदयहृदयहारितां प्रतिपद्यते । तदिदमुक्तम्—

अलङ्कारस्य कवयो यत्रालङ्करणान्तरम् ।
असन्तुष्टा निबध्नन्ति हारादेर्मणिबन्धवत्[7] ॥ १९ ॥ इति ।

एतामेव विविधप्रकारां[8] वक्रतां विशिनष्टि, यदेवंविधवक्ष्यमाणविशेषणविशिष्टा[9] विधातव्येति—

नातिनिर्बन्धविहिता नाप्यपेशलभूषिता ।
पूर्वावृत्तपरित्यागनूतनावर्तनोज्ज्वला ॥ ४ ॥

---

(1) पुष्णाति only in B. (2) इति यथा च lost in A. (3) See above p. 82. (4) See above p. 80. (5) ०विन्यस्तो A. (6) A marks a lacuna here. (7) This is कारिका i, 35. (8) एतामेवंविधप्रकारां A. (9) ०वर्ज्यमानविशेष A.

नातिनिर्बन्धविहिता[1]—'निर्बन्ध'-शब्दोऽत्र व्यसनितायां वर्तते। तेनातिनिर्बन्धेन पुनः पुनरावर्तनव्यसनितया न विहिता, अप्रयत्नविरचितेत्यर्थः। व्यसनितया प्रयत्नविरचने हि प्रस्तुतौचित्यपरिहाणेर्वाच्यवाचकयोः[2] परस्परस्पर्धित्वलक्षणसाहित्यविरहः पर्यवस्यति। यथा

भण तरुणि[3] इति ॥ २० ॥

नाप्यपेशलभूषिता न चाप्यपेशलैरसुकुमारैरक्षरैरलङ्कृता। यथा

शीर्णघ्राणाङ्घ्रि[4] इति ॥ २१ ॥

तदेवं कीदृशी तर्हि कर्तव्येत्याह—पूर्वावृत्तपरित्यागनूतनावर्तनोज्ज्वला। पूर्वमावृत्तानां पुनः पुनर्विरचितानां परित्यागेन प्रहाणेन नूतनानामभिनवानां वर्णानामावर्तनेन पुनः पुनः परिग्रहेण च तदेवमुभाभ्यां प्रकाराभ्यामुज्ज्वला भ्राजिष्णुः। यथा

एतां पश्य पुरस्तटीमिह किल क्रीडाकिरातो हरः
कोदण्डेन किरीटिना सरभसं चूडान्तरे ताडितः।
इत्याकर्ण्य कथाद्भुतं हिमनिधावद्रौ सुभद्रापते-
र्मन्दं मन्दमकारि येन निजयोर्दोर्दण्डयोर्मण्डनम्[5] ॥ २२ ॥

यथा वा

हंसानां निनदेषु[6] इति ॥ २३ ॥

---

(1) Omitted in A. (2) परिहानिः in A. (3) See above p. 7. (4) मयूरशतक श्लो॰ 6 = काव्यप्रकाश p. 418 = Hemacandra p. 170. B reads घ्राय for घ्राण ; A has only शीर्णघ्राण इति. The entire verse runs thus :

शीर्णघ्राणाङ्घ्रिपाणीन् व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्
दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन् यः।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते-
र्दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमंहोविघातम् ॥

(5) Quoted anonymously in अभिनवभारती, ch. xvi = दशरूपकावलोक p. 41 = सरस्वतीकण्ठा॰ p. 300 = Hemacandra p. 297. (6) See above p. 44.

यथा च

एतन्मन्दविपक्व[1] इत्यादौ ॥ २४ ॥

यथा वा

णमह दसाणणसरहसकरतुलिअबलन्तसेलभअविहलं[2] ।

वेवंतथोरथणहरहरकअकंठग्गहं गोरिं ॥ २५ ॥

एवमेतां वर्णविन्यासवक्रतां व्याख्याय तामेवोपसंहरति—

**वर्णच्छायानुसारेण गुणमार्गानुवर्तिनी ।**

**वृत्तिवैचित्र्ययुक्तेति सैव प्रोक्ता चिरन्तनैः ॥ ५ ॥**

वर्णानामक्षराणां या छाया कान्तिः अच्युतादिगुणसंपत्तया हेतुभूतया यदनुसरणमनुसारः प्राप्यस्वरूपानुप्रवेशस्तेन। गुणान् माधुर्यादीन् मार्गांश्च सुकुमारप्रभृतीननुवर्तते या सा तथोक्ता। तत्र गुणानामान्तरतम्यात् प्रथममुपन्यसनम्, गुणद्वारेणैव मार्गानुसरणोपपत्तेः। तदयमत्रार्थः—यद्येषा वर्णविन्यासवक्रता व्यञ्जनच्छायानुसारेणैव, तथापि[3] प्रतिनियतगुणविशिष्टानां मार्गाणामनुवर्तनद्वारेण[4] यथा स्वरूपानुप्रवेशं विदधाति तथा विधातव्येति। तत एव च तस्यास्तन्निबन्धनाः प्रविततः[5] प्रकाराः समुल्लसन्ति। चिरन्तनैः पुनः सैव स्वातन्त्र्येण वृत्तिवैचित्र्ययुक्तेति प्रोक्ता। वृत्तीनामुपनागरिकादीनां यद् वैचित्र्यं विचित्रभावः स्वनिष्ठसंख्याभेदभिन्नत्वं तेन युक्ता समन्वितेति चिरन्तनैः पूर्वसूरिभिरभिहिता। तदिदमत्र तात्पर्यम्—यदस्याः सकलगुणस्वरूपानुसरणसमन्वयेन सुकुमारादिमार्गानुवर्तनायत्तवृत्तेः

(1) See above p. 68 (2) चलक्क for बलन्त in A. The छाया of the verse would be

नमत दशाननसरभसकरतुलितवलच्छैलभयविह्वलाम् ।

वेपमानस्थूलस्तनभरहरकृतकण्ठग्रहां गौरीम् ॥

(3) Omitted in B. (4) ॰मनुसरणद्वारेण A. (5) Omitted in A.

पारतन्त्र्यमपरिगणितप्रकारत्वं चैतदुभयमप्यवश्यम्भावि। तस्मात् पारतन्त्र्यं परिमितप्रकारत्वं चेति[1] नातिचतुरस्रम्। ननु च प्रथममेको द्वावित्यादिना प्रकारेण[2] परिमितान् प्रकारान् स्वतन्त्रत्वं[3] च स्वयमेव व्याख्याय किमेतदुक्तमिति चेन्नैष दोषः, यस्माल्लक्षणकारैर्यस्य कस्यचित्पदार्थस्य[4] समुदायपरायत्तवृत्तेः परव्युत्पत्तये प्रथममपोद्धारबुद्ध्या स्वतन्त्रतया स्वरूपमुल्लिख्यते, ततः समुदायान्तर्भावो[5] भविष्यतीत्यलमतिप्रसङ्गेन।

येयं वर्णविन्यासवक्रता नाम[6] वाचकालङ्कृतिः स्थाननियमाभावात् सकलवाक्यस्य विषयत्वेन समाम्नाता, सैव प्रकारान्तरविशिष्टा नियतस्थानतयोपनिबध्यमाना किमपि वैचित्र्यान्तरमावध्नातीत्याह—

समानवर्णमन्यार्थं प्रसादि श्रुतिपेशलम्।
औचित्ययुक्तमाद्यादिनियतस्थानशोभि यत् ॥६॥
यमकं नाम सोऽप्यस्याः प्रकारः परिदृश्यते।
स तु शोभान्तराभावादिह नाति प्रतन्यते ॥ ७ ॥

कोऽप्यस्याः प्रकारः परिदृश्यते, अस्याः पूर्वोक्तायाः कोऽप्यपूर्वः प्रभेदो विभाव्यते। कोऽसावित्याह—यमकं नाम। यमकमिति यस्य प्रसिद्धिः। तच्च कीदृशम्—समानवर्णम्। समानाः सरूपाः सदृशश्रुतयो वर्णा यस्मिन् तत्तथोक्तम्। एवमेकस्य द्वयोर्बहूनां सदृशश्रुतीनां व्यवहितमव्यवहितं वा यदुपनिबन्धनं तदेव यमकमित्युच्यते। तदेवमेकरूपे संस्थानद्वये सत्यपि—अन्यार्थं भिन्नाभिधेयम्। अन्यच्च

---

(1) A omits all words from चेतदुभय॰ to चेति. (2) प्रकरणेन A. (3) स्वातन्त्र्यं A. (4) अर्थस्य for पदार्थस्य in A. (5) A reads ततस॰ after which some letters (i. e. त्समुदा॰ possibly) are lost. After this, A reads यान्तर्भावो. (6) Omitted in A.

कीदृशम्—प्रसादि प्रसादगुणयुक्तं झगिति वाक्यसमर्पकम्[1] अकदर्थनाबोध्यमिति यावत्। श्रुतिपेशलमित्येतदेव विशिष्यते। श्रुतिः श्रवणेन्द्रियं तत्र पेशलं रञ्जकम्, अकठोरशब्दविरचितम्। कीदृशम्[2]—औचित्ययुक्तम्। औचित्यं वस्तुनः स्वभावोत्कर्षस्तेन युक्तं समन्वितम्। यत्र यमकोपनिबन्धनव्यसनित्वेनाप्यौचित्यमपरिम्लानमित्यर्थः। तदेव विशेषणान्तरेण विशिनष्टि—आद्यादिनियतस्थानशोभि यत्। आदिरादिर्येषां ते तथोक्ताः प्रथममध्यान्तास्तान्येव नियतानि स्थानानि विशिष्टाः सन्निवेशास्तैः शोभते भ्राजते यत्तथोक्तम्। अत्राद्यादयः[3] सम्बन्धिशब्दाः पदादिभिर्विशेषणीयाः। स तु प्रकारः प्रोक्तलक्षणसम्पदुपेतोऽपि भवन् इह नाति प्रतन्यते ग्रन्थेऽस्मिन्नाति विस्तार्यते। कुतः—शोभान्तराभावात्। स्थाननियमव्यतिरिक्तस्यान्यस्य शोभान्तरस्य छायान्तरस्यासम्भवादित्यर्थः। अस्य च वर्णविन्यासवैचित्र्यव्यतिरेकेणान्यत्किञ्चिदपि जीवितान्तरं न परिदृश्यते[4]। तेनानन्तरोक्तालङ्कृतिप्रकारतैव युक्ता। उदाहरणान्यत्र शिशुपालवधे चतुर्थे सर्गे समर्पकाणि कानिचिदेव[5] यमकानि, रघुवंशे वा वसन्तवर्णने।

एवं पदावयवानां वर्णानां विन्यासवक्रभावे विचारिते वर्णसमुदायात्मकस्य पदस्य च वक्रभावविचारः[6] प्राप्तावसरः। तत्र पदपूर्वार्धस्य तावद्वक्रताप्रकाराः कियन्तः सम्भवन्तीति प्रक्रमते—

यत्र रूढेरसम्भाव्यधर्माध्यारोपगर्भता।
सद्धर्मातिशयारोपगर्भत्वं वा प्रतीयते ॥ ८ ॥
लोकोत्तरतिरस्कारश्लाघ्योत्कर्षाभिधित्सया।
वाच्यस्य सोच्यते कापि रूढिवैचित्र्यवक्रता ॥ ९ ॥

---

(1) A omits वाक्य. (2) Omitted in A. (3) अत्रादयः A. (4) दृश्यते A. (5) कतिचिदेव B. (6) वक्रभाव omitted in B.

यत्र रूढेरसम्भाव्यधर्माध्यारोपगर्भता प्रतीयते। शब्दस्य नियतवृत्तिता नाम धर्मो रूढिरुच्यते[1], रोहणं रूढिरिति कृत्वा। सा च द्विप्रकारा सम्भवति—नियतसामान्यवृत्तिता नियतविशेषवृत्तिता। तेन रूढि शब्देनात्र रूढिप्रधानः शब्दोऽभिधीयते[2], धर्मधर्मिणोरभेदोपचारदर्शनात्। यत्र यस्मिन् विषये[3] रूढिशब्दस्य असम्भाव्यः सम्भावयितुमशक्यो यो धर्मः कश्चित्परिस्पन्दस्तस्याध्यारोपः समर्पणं गर्भोऽभिप्रायो यस्य स तथोक्तस्तस्य भावस्तत्ता सा प्रतीयते प्रतिपद्यते। यत्रेति सम्बन्धः। सद्धर्मातिशयारोपगर्भत्वं वा। सश्चासौ धर्मश्च सद्धर्मः विद्यमानः पदार्थस्य परिस्पन्दस्तस्मिन् यस्य कस्यचिदपूर्वस्यातिशयस्याद्भुतरूपस्य महिम्न आरोपः समर्पणं गर्भोऽभिप्रायो[4] यस्य स तथोक्तस्तस्य भावस्तत्त्वम्। तच्च वा यस्मिन् प्रतीयते। केन हेतुना—लोकोत्तरतिरस्कारश्लाघ्योत्कर्षाभिधित्सया। लोकोत्तरः सर्वातिशायी यस्तिरस्कारः न्यक्कीकरणं श्लाघ्यश्च स्पृहणीयो य उत्कर्षः सातिशयत्वं तयोरभिधित्सा अभिधातुमिच्छा वक्तुकामता तया। कस्य—वाच्यस्य। रूढिशब्दस्य वाच्यो योऽभिधेयोऽर्थस्तस्य। सोच्यते कथ्यते काप्यलौकिकी रूढिवैचित्र्यवक्रता। रूढिशब्दस्यैवंविधेन वैचित्र्येण विचित्रभावेन वक्रता वक्रभावः। तदिदमत्र तात्पर्यम्—यत्सामान्यमात्रसंस्पर्शिनां शब्दानामनुमानवन्नियतविशेषालिङ्गनं यद्यपि स्वभावादेव न किञ्चिदपि सम्भवति, तथाप्यनया युक्त्या कविविवक्षितनियतविशेषनिष्ठतां नीयमानाः[5] कामपि चमत्कारकारितां प्रतिपद्यन्ते[6]।

यथा

ताला जाअंति गुणा जाला दे सहिअएहि घेप्पंति।
रइकिरणाणुग्गहिआइ होंति कमलाइ कमलाइं[7] ॥ २६ ॥

(1) रूढिरुच्य lost in A. (2) अभिधीयते lost in A. (3) विषयीभूते A. (4) अभिप्रायो omitted in A. (5) ०विशेषनिश्चितौन्नीयमानां A. (6) प्रतिपद्यते A. (7) Quoted in ध्वन्यालोक (p. 62) from आनन्दवर्द्धन's own lost Prakrit

प्रतीयत इति क्रियापद[1]वैचित्र्यस्यायमभिप्रायो यदेवंविधे विषये शब्दानां वाचकत्वेन न व्यापारः, अपि तु वस्त्वन्तरवत्प्रतीतिकारित्वमात्रेणेति युक्तियुक्तमप्येतदिह नाति प्रतन्यते। यस्माद्[2] ध्वनिकारेण व्यङ्ग्यव्यञ्जकभावोऽत्र सुतरां समर्थितस्तत् किं पौनरुक्त्येन।

सा च रूढिवैचित्र्यवक्रता[3] मुख्यतया द्विप्रकारा सम्भवति—यत्र रूढिवाच्योऽर्थः स्वयमेव आत्मन्युत्कर्षं निकर्षं वा समारोपयितुकामः कविनोपनिबध्यते, तस्यान्यो वा कश्चिद्वक्तेति। यथा

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः[4]।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे[5]
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव[6]॥ २७॥

अत्र 'राम'-शब्देन 'दृढं कठोरहृदयः' 'सर्वं सहे[7]' इति यदुभाभ्यां प्रतिपादयितुं न पार्यते, तदेवंविधविविधोद्दीपनविभावविभवसहनसामर्थ्यकारणं दुःसहजनकसुताविरहव्यथाविसंष्ठुलेऽपि समये निरपत्रपप्राणपरिरक्षावैचक्षण्यलक्षणं संज्ञापदनिबन्धनं[8] किमप्यसम्भाव्यमसाधारणं क्रौर्यं प्रतीयते। वैदेहीत्यनेन जलधरसमयसुन्दरपदार्थ-

---

poem विषमबाणलीला = काव्यप्रकाश p. 430 (anon) = Ruyyaka p. 23 (anon). The छाया would be

तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि॥

(1) पद omitted in A. (2) यथा A. (3) रूढिशब्दस्य वक्रता A. (4) ०केकाकला: B. (5) सर्वंसहा B. (6) महानाटक v, 7 = ध्वन्यालोक p. 61 (anon) = प्रतिहारेन्दुराज on उद्भट p. 86 (anon) = काव्यप्रकाश p. 188 (anon) = मुकुलभट्ट p. 11 (anon). (7) सर्वंसहा B. (8) ०रक्षावैलक्ष्य० A; लक्षणसंविज्ञानपद० B.

सन्दर्शनासहत्वसमर्पक:[1] सहजसौकुमार्यसुलभं किमपि कातरत्वं तस्याः समर्थ्यते। तदेव च पूर्वस्माद्विशेषाभिधायिनः 'तु'-शब्दस्य जीवितम्।

विद्यमानधर्मातिशयवाच्याध्यारोपगर्भत्वं यथा

ततः प्रहस्याह पुनः पुरन्दरं
व्यपेतभीर्भूमिपुरन्दरात्मजः[2]।
गृहाण शस्त्रं[3] यदि सर्ग[4] एष ते
न खल्वनिर्जित्य रघुं कृती भवान्[5] ॥ २८ ॥

'रघु'-शब्देनात्र सर्वत्राप्रतिहतप्रभावस्यापि[6] सुरपतेस्तथाविधाध्यवसाय-व्याघातसामर्थ्यनिबन्धनः कोऽपि स्वपौरुषातिशयः[7] प्रतीयते। प्रहस्येत्यनेनैतदेवोपबृंहितम्।

अन्यो वक्ता यत्र तत्रोदाहरणं यथा

आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी।
सम्भूतिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्वत्र सर्वे गुणाः[8] ॥ २९ ॥

'रावण'-शब्देनात्र सकललोकप्रसिद्धदशाननदुर्विलासव्यतिरिक्तमभि[9]-जनविवेकसदाचारप्रभावसम्भोगसुखसमृद्धिलक्षणायाः[10] समस्तवरगुण-

---

(1) समर्थकं B. (2) This is the reading of the Mss क and ग in Nandargikar's edition of रघु०. (3) lost in A. (4) गर्व B. (5) रघु० iii, 51. (6) प्रताप for प्रभाव in B. (7) स्वगौरवातिशयः A. (8) बाल-रामायण i, 36 (p. 17) = काव्यप्रकाश p. 400. (9) प्रसिद्धदुर्विलासदशाननव्यक्त-मभि० A. (10) A reads सुप्रभाव for प्रभाव and adds संतोत्पन्ना after सम्भोग and before सुखसमृद्धि०.

सामग्रीसम्पदस्तिरस्कारकारणं किमप्यनुपादेयतानिमित्तभूतमौपहत्यं प्रतीयते ।

अत्रैव विद्यमानगुणातिशयाध्यारोपगर्भत्वं यथा—

रामोऽसौ भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं पराम्[1] ॥ ३० ॥

अत्र 'राम'-शब्देन सकलत्रिभुवनातिशायी रावणानुचरविस्मयास्पदं शौर्यातिशयः प्रतीयते[2] ।

एषा च रूढिवैचित्र्यवक्रता प्रतीयमानधर्मबाहुल्याद् बहुप्रकारा भिद्यते । तच्च[3] स्वयमेवोत्प्रेक्षणीयम् । यथा

गुर्वर्थमर्थी श्रुतपारदृश्वा
रघोः सकाशादनवाप्य कामम्[4] ।
गतो वदान्यान्तरमित्ययं मे
मा भूत्परीवादनवावतारः[5] ॥ ३१ ॥

'रघु'-शब्देनात्र त्रिभुवनातिशय्यौदार्यातिरेकः[6] प्रतीयते । एतस्यां वक्रतायामयमेव परमार्थो यत् सामान्यमात्रनिष्ठतामपाकृत्य कविविवक्षितविशेषप्रतिपादनसामर्थ्यलक्षणः शोभातिशयः समुल्लास्यते । संज्ञाशब्दानां नियतार्थनिष्ठत्वात् सामान्यविशेषभावो न कश्चित् सम्भवतीति न वक्तव्यम् । यस्मात्तेषामप्यवस्थासहस्रसाधारणवृत्तेर्वाच्यस्य नियतदशाविशेषवृत्तिनिष्ठता सत्कविविवक्षिता सम्भवत्येव, स्वरश्रुतिन्यायेन लग्नांशुकन्यायेन चेति ।

एवं रूढिवक्रतां विविच्य क्रमप्राप्तसमन्वयां पर्यायवक्रतां विविनक्ति—

**अभिधेयान्तरतमस्तस्यातिशयपोषकः ।**
**रम्यच्छायान्तरस्पर्शात्तदलङ्कर्तुमीश्वरः ॥ १० ॥**

---

(1) See above p. 31. (2) A reads °त्रिभुवनातिशायि, शौर्यादयः and प्रतीयन्ते. (3) तै तु B. (4) °दनवाप्तकामः B. (5) रघु° V, 24. (6) अतिशयः for °तिरेकः in A.

स्वयं विशेषणेनापि स्वच्छायोत्कर्षपेशलः ।
असम्भाव्यार्थपात्रत्वगर्भं यश्चाभिधीयते[1] ॥ ११ ॥
अलङ्कारोपसंस्कारमनोहारिनिबन्धनः[1] ।
पर्यायस्तेन वैचित्र्यं परा पर्यायवक्रता ॥ १२ ॥

पूर्वोक्तविशेषणविशिष्टः काव्यविषये पर्यायस्तेन हेतुना[2] यद्वैचित्र्यं विचित्रभावो विच्छित्तिविशेषः सा परा प्रकृष्टा काचिदेव पर्यायवक्रतेत्युच्यते। पर्यायप्रधानः शब्दः पर्यायोऽभिधीयते। तस्य चैतदेव पर्यायप्राधान्यं यत् स कदाचिद्विवक्षिते[3] वस्तुनि वाचकतया प्रवर्तते, कदाचिद्वाचकान्तरमिति। तेन पूर्वोक्तनीत्या बहुप्रकारः पर्यायोऽभिहितः[4], तत् किमियन्तोऽस्य[5] प्रकाराः[6] सन्तीत्याह—अभिधेयान्तरतमः। अभिधेयं वाच्यं वस्तु तस्यान्तरतमः प्रत्यासन्नतमः[7]। यस्मात् पर्यायशब्दत्वे सत्यप्यन्तरङ्गत्वात् स यथा विवक्षितं वस्तु व्यनक्ति[8] तथा नान्यः कश्चिदिति। यथा

नाभियोक्तुमनृतं त्वमिष्यसे
कस्तपस्विविशिखेषु चादरः ।
सन्ति भूभृति हि नः शराः परे
ये पराक्रमवसूनि वज्रिणः[9] ॥ ३२ ॥

अत्र महेन्द्रवाचकेष्वसंख्येषु[10] सम्भवत्सु पर्यायशब्देषु 'वज्रिणः' इति प्रयुक्तः पर्यायवक्रतां पुष्णाति। यस्मात् सततसन्निहितवज्रस्यापि[11]

---

(1) A omits these two lines of the कारिका here. (2) A reads: एवंविधः पर्यायस्तेन वैचित्र्यं परा पर्यायवक्रता (apparently repeating partly the last line of the कारिका 12) पूर्वोक्तविशेषणविशिष्टा कापि। तेन पर्यायविषयहेतुना. (3) क्षिते lost in A. (4) पर्यायो विहितः A. (5) कियन्तस्य A. (6) Lost in A. (7) प्रसन्नतमः A. (8) ०तं वस्तु व्यन० lost in A. (9) किरात० xiii, 58. (10) इन्द्रवाचकेष्व० A. (11) वज्र is omitted in B.

सुरपतेर्यं पराक्रमवसूनि विक्रमधनानीति सायकानां लोकोत्तरत्व-प्रतीतिः। 'तपस्वि'-शब्दोऽप्यतितरां रमणीयः। यस्मात् सुभटसायकाना-मादरो[1] बहुमानः कदाचिदुपपद्यते, तापसमार्गणेषु पुनरकिञ्चित्करेषु कः संरम्भ इति। यथा वा

कस्त्वं ज्ञास्यसि मां स्मर[2] स्मरसि मां दिष्ट्या किमभ्यागत-
स्त्वामुन्मादयितुं कथं ननु बलात् किं ते बलं पश्य तत्[3]।
पश्यामीत्यभिधाय पावकमुचा यो लोचनेनैव तं
कान्ताकण्ठनिषक्तबाहुमदहत्तस्मै नमः शूलिने ॥ ३३ ॥

अत्र परमेश्वरे पर्यायसहस्रेष्वपि सम्भवत्सु 'शूलिनः' इति यत्प्रयुक्तं तत्रायमभिप्रायो यत्तस्मै भगवते नमस्कारव्यतिरेकेण किमन्यदभिधीयते[4]। यत्तथाविधोत्सेकपरित्यक्तविनयवृत्तेः स्मरस्य कुपितेनापि तदभिमतावलोकव्यतिरेकेण[5] तेन[6] सततसन्निहितशूलेनापि कोपसमुचितमायुधग्रहणं नाचरितम्। लोचनपातमात्रेणैव कोपकार्यकरणाद्भगवतः प्रभावातिशयः परिपोषितः। अतएव तस्मै नमोऽस्त्विति युक्तियुक्तता प्रतिपद्यते।

अयमपरः पदपूर्वार्धवक्रताहेतुः पर्यायः—यस्तस्यातिशयपोषकः[7]। तस्याभिधेयस्यार्थस्यातिशयमुत्कर्षं पुष्णाति यः स तथोक्तः। यस्मात्सहजसौकुमार्यसुभगोऽपि पदार्थस्तेन परिपोषितातिशयः सुतरां सहृदयहृदयहारितां प्रतिपद्यते। यथा

सम्बन्धी रघुभूभुजां मनसिजव्यापारदीक्षागुरु-
र्गौराङ्गीवदनोपमापरिचितस्तारावधूवल्लभः।
सद्योमार्जितदाक्षिणात्यतरुणीदन्तावदातद्युति-
श्चन्द्रः सुन्दरि दृश्यतामयमितश्चण्डीशचूडामणिः[8] ॥ ३४ ॥

(1) भट for सुभट in A. (2) स्मरं A. (3) यत् B. (4) ०भिधीयताम् B. (5) ०व्यतिकरे A. (6) Omitted in B. (7) B omits यः. (8) बालरामायण x, 41 (p. 293) = औचित्यविचार, श्लो० 12.

अत्र पर्यायाः सहजसौन्दर्यसम्पदुपेतस्यापि चन्द्रमसः सहृदयहृदयाह्लादकारणं कमप्यतिशयमुत्पादयन्तः पदपूर्वार्धवक्रतां पुष्णन्ति। तथा च, रामेण रावणं निहत्य पुष्पकेन गच्छता सीतायाः सविस्रम्भं स्वैरकथास्वेतदभिधीयते यच्चन्द्रः सुन्दरि दृश्यतामिति, रामणीयकमनोहारिणि सकललोकलोचनोत्सवश्चन्द्रमा विचार्यतामिति। यस्मात्तथाविधानामेव तादृशः समुचितो विचारगोचरः[1]। सम्बन्धी रघुभूभुजामित्यनेन चास्माकं नापूर्वो बन्धुरयमित्यवलोकनेन सम्मान्यतामिति प्रकारान्तरेणापि तद्विषयो बहुमानः प्रतीयते। शिष्टाश्च[2] तदतिशयाधानप्रवणत्वमेवात्मनः प्रथयन्ति। तत एव च प्रस्तुतमर्थं प्रति प्रत्येकं पृथक्त्वेनोत्कर्षप्रकटनात्पर्यायाणां बहूनामप्यपौनरुक्त्यम्[3]। तृतीये पादे विशेषणवक्रता विद्यते, न पर्यायवक्रत्वम्।

अयमपरः पर्यायप्रकारः पदपूर्वार्धवक्रतानिबन्धनः—यस्तदलङ्कर्तुमीश्वरः। तदभिधेयलक्षणं[4] वस्तु विभूषयितुं यः प्रभवतीत्यर्थः। कस्मात्—रम्यच्छायान्तरस्पर्शात्। रम्यं रमणीयं यच्छायान्तरं विच्छित्त्यन्तरं श्लिष्टत्वादि[5] तस्य स्पर्शात्, शोभान्तरप्रतीतेरित्यर्थः। कथम्—स्वयं विशेषणेनापि। स्वयमात्मनैव, स्वविशेषणभूतेन पदान्तरेण वा। तत्र स्वयं यथा

इत्थं जडे जगति को नु बृहत्प्रमाण-
कर्णः करी ननु भवेद्[6] ध्वनितस्य पात्रम्।
इत्यागतं[7] झटिति योऽलिनमुन्ममाथ
मातङ्ग एव किमतः परमुच्यतेऽसौ[8] ॥ ३५ ॥

---

(1) ०चरः lost in A. (2) lost in A. (3) अपि lost in A. (4) तत्र omitted in A. (5) श्लेषश्लिष्टत्वादि A. (6) भाव B. (7) इत्याह तं A. (8) सुभाषितावली no. 628 ( भट्टवासुदेवस्य ). See above p. 35.

अत्र 'मातङ्ग' शब्दः प्रस्तुते वारणमात्रे प्रवर्तते। श्लिष्टया वृत्त्या च चण्डाल[1]-लक्षणस्याप्रस्तुतस्य वस्तुनः प्रतीतिमुत्पादयन् रूपकालङ्कारच्छायासंस्पर्शाद् गौर्वाहीक इत्यनेन न्यायेन सादृश्यनिबन्धनस्योपचारस्य सम्भवात् प्रस्तुतस्य वस्तुनस्तत्त्वमध्यारोपयन् पर्यायवक्रतां पुष्णाति। यस्मादेवं-विधे विषये प्रस्तुतस्याप्रस्तुतेन सम्बन्धोपनिबन्धो रूपकालङ्कार[2]द्वारेण कदाचिदुपमामुखेन वा। यथा—स एवायं स इवायमिति[3] वा। एष एव च[4] शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यस्य पदध्वनेर्विषयः, बहुषु चैवं-विधेषु सत्सु वाक्यध्वनेर्वा। यथा

कुसुमसमययुगमुपसंहरन्नुत्फुल्लमल्लिकाधवलाट्टहासो[5] व्यजृम्भत ग्रीष्माभिधानो महाकालः[6] ॥ ३६ ॥

यथा

वृत्तेऽस्मिन् महाप्रलये धरणीधारणायाधुना त्वं शेषः[7] इति ॥३७॥

अत्र युगादयः शब्दाः प्रस्तुताभिधानपरत्वेन प्रयुज्यमानाः सन्तोऽप्य-प्रस्तुतवस्तुप्रतीतिकारितया कामपि काव्यच्छायां समुन्मीलयन्तः प्रतीयमानालङ्कारव्यपदेशभाजनं भवन्ति[8]। विशेषणेन यथा

सुस्निग्धमुग्धधवलोरुदृशं[9] विदग्ध-
मालोक्य यन्मधुरमद्य[10] विलासदिग्धम्[11]।
भस्मीचकार मदनं ननु काष्ठमेव
तन्नूनमीश इति वेत्ति[12] पुरन्ध्रिलोकः ॥ ३८ ॥

अत्र काष्ठमिति विशेषणपदं[13] वर्ण्यमानपदार्थापेक्षया[14] मन्मथस्य

---

(1) चाण्डाल A. (2) A repeats here च्छायासंस्पर्शाद् गौर्वाहीक इत्यनेन न्यायेन सादृश्यनिबन्धनस्योपचारस्य सम्भव० from above. (3) स वायमिति B. (4) एव च omitted in A. (5) धवल omitted in A. (6) हर्षचरित ii (p. 72)=ध्वन्यालोक p. 99 (anon). (7) हर्षचरित ii, loc. cit.=ध्वन्यालोक p. 127. (8) ०व्यपदेशितां जनयन्ति B. (9) ०दुग्ध० B. (10) मुग्ध for ०मद्य in B. (11) ०दिग्धः B. (12) lost in A. (13) ०परं A. (14) ०पेक्षया B.

नीरसतां प्रतिपादयद्[1] रम्यच्छायान्तरस्पर्शिश्लेषच्छायामनोज्ञविन्यासपरमस्मिन्[2] वस्तुन्यप्रस्तुते मदनाभिधानपादपलक्षणे प्रतीतिमुत्पादयद्[3] रूपकालङ्कारच्छायासंस्पर्शात् कामपि पर्यायवक्रतामुन्मीलयति।

अयमपरः पर्यायप्रकारः पदपूर्वार्धवक्रतायाः कारणम्—यः स्वच्छायोत्कर्षपेशलः। स्वस्यात्मनश्छाया कान्तिर्या सुकुमारता तदुत्कर्षेण तदतिशयेन यः पेशलो हृदयहारी। तदिदमत्र तात्पर्यम्—यद्यपि वर्ण्यमानस्य वस्तुनः प्रकारान्तरोल्लासकत्वेन[4] व्यवस्थितिस्तथापि परिस्पन्दसौन्दर्यसम्पदेव सहृदयहृदयहारितां प्रतिपद्यते। यथा

> नृत्यमुत्कयति ताण्डवलोला-
> पण्डिताखिलहरीगुरुपादैः[5]।
> उत्थितं विषमकाण्डकुटुम्ब-
> स्यांशुभिः स्मरवतीविरहो[6] माम्॥ ३८॥

अत्रेन्दुपर्यायो 'विषमकाण्डकुटुम्ब'-शब्दः कविनोपनिबद्धः। यस्मान्मृगाङ्कोदयद्वेषिणा[7] विरहविधुरहृदयेन केनचिदेतदुच्यते। यदयमप्रसिद्धोऽप्यपरिम्लानसमन्वतया प्रसिद्धतमतामुपनीतस्तेन प्रथमतरोल्लिखितत्वेन च[8] चेतनचमत्कारकारितामवगाहते। एष च स्वच्छायोत्कर्षपेशलः सहजसौकुमार्यसुभगत्वेन नूतनोल्लेखविलक्षणत्वेन च

---

(1) प्रतिपादयन् A. (2) ०स्पर्शं A and ०विन्यासमपरस्मिन् B. (3) ०मुत्पादयन् A. (4) B has redundant न here. (5) ०पातैः A; गुरु lost in A. In the first line, ०पुत्कषति for मुत्कयति in B. (6) विरहे B. (7) There is no मृगाङ्को० in A, which reads पूर्ण with a lacuna (apparently पूर्णचन्द्रो०). (8) च is omitted in A, which has a lacuna here, followed by समानचेतन० (apparently विभासमानचेतन०).

कविभिः पर्यायान्तरपरिहारपूर्वकमुपनिबध्यते[1]। यथा कृष्णकुटिलकेशीति वक्तव्ये यमुनाकल्लोलवक्रालकेति[2]। यथा वा गौराङ्गीवदनोपमापरिचित[3] इत्यत्र वनितादिवाचकसहस्रसद्भावेऽपि[4] गौराङ्गीत्यतीवाग्राम्यतारमणीयम्[5]।

अयमपरः पर्यायप्रकारः पदपूर्वार्धवक्रताभिधायी—असम्भाव्यार्थपात्रत्वगर्भं यश्चाभिधीयते। वर्ण्यमानस्यासम्भाव्यः[6] सम्भावयितुमशक्यो योऽर्थः कश्चित्परिस्पन्दस्तत्र पात्रत्वं भाजनत्वं गर्भोऽभिप्रायो यत्राभिधाने तत्तथाविधं कृत्वा यश्चाभिधीयते भण्यते[7]। यथा

अलं महीपाल तव श्रमेण
प्रयुक्तमप्यस्त्रमितो वृथा स्यात्।
न पादपोन्मूलनशक्ति रंहः
शिलोच्चये मूर्छति मारुतस्य[8] ॥ ४० ॥

अत्र महीपालेति राज्ञः सकलपृथ्वीपरिरक्षणक्षमपौरुषस्यापि[9] तथाविधप्रयत्नपरिपालनीयगुरुगोरूपजीवमात्रपरित्राणासामर्थ्यं[10] स्वप्नेऽप्यसम्भावनीयं यत्तत्पात्रत्वगर्भमामन्त्रणमुपनिबद्धम्[11]। यथा वा

भूतानुकम्पा तव चेदियं गौ-
रेका भवेत् स्वस्तिमती त्वदन्ते।
जीवन् पुनः शश्वदुपप्लवेभ्यः
प्रजाः प्रजानाथ पितेव पासि[12] ॥ ४१ ॥

---

(1) ०हार० lost in A. (2) ०लके इति A. (3) See above p. 93. (4) ०निता० lost in A. (5) ०त्यभिधानमतीव रमणीयम् A. (6) A has वस्तुनः instead of असम्भाव्यः. (7) Omitted in B. (8) रघु० ii, 34. (9) क्षम omitted in B. (10) जीव omitted in B. (11) यत् omitted in B. (12) रघु० ii, 48.

अत्र यदि[1] प्राणिकरुणाकारणं निजप्राणपरित्यागमाचरसि तदप्ययुक्तम्। यस्मात्त्वदन्ते स्वस्तिमती भवेदियमेकैव गौरिति त्रितयमप्यनादरास्पदम्। जीवन् पुनः शश्वत्सदैवोपप्लवेभ्योऽनर्थेभ्यः प्रजाः सकलभूतधात्रीवलयवर्तिनीः प्रजानाथ पासि रक्षसि[2] पितेवेत्यनादरातिशयः प्रथते। तदेवं यद्यपि सुस्पष्टसमन्वयोऽयं वाक्यार्थस्तथापि तात्पर्यान्तरमत्र प्रतीयते। यस्मात् सर्वस्य कस्यचित्प्रजानाथत्वे सति सदैव[3] तत्परिरक्षणस्याकरणमसम्भाव्यम्। तत्पात्रत्वगर्भमेव तदभिहितम्[4]। यस्मात् प्रत्यक्षप्राणिमात्रभक्ष्यमाण[5]गुरुहोमधेनुप्राणपरिरक्षणापेक्षा[6]-निरपेक्षस्य सतो जीवतस्तवानेन न्यायेन कदाचिदपि प्रजापरिरक्षणं मनागपि न सम्भाव्यत इति प्रमाणोपपन्नम्। तदिदमुक्तम्

प्रमाणवत्त्वादायातः[7] प्रवाहः केन वार्यते ॥४२॥

इति। अत्राभिधानप्रतीतिगोचरीकृतानां पदार्थानां[8] परस्परप्रतियोगित्व[9]मुदाहरणप्रत्युदाहरण[10]न्यायेनानुसन्धेयम्।

अयमपरः पर्यायप्रकारः[11] पदपूर्वार्धवक्रताकारणं[12] विदधाति—अलङ्कारोपसंस्काररमनोहारिनिबन्धनः। अत्र 'अलङ्कारोपसंस्कार'-शब्दे तृतीयासमासः षष्ठीसमासश्च करणीयः[13]। तेनार्थद्वयमभिहितं भवति। अलङ्कारेण रूपकादिनोपसंस्कारः शोभान्तराधानं यत्तेन मनोहारि हृदयरञ्जकं निबन्धनमुपनिबन्धो यस्य स तथोक्तः। अलङ्कारस्योत्प्रेक्षादेरुपसंस्कारः शोभान्तराधानं[14] चेति विग्रहः। तत्र तृतीयासमासपक्षोदाहरणं यथा

---

(1) A adds वा after this. (2) परिरक्षसि A. (3) तदेव A. (4) एव omitted in A, which also reads एतदभि० for तदभि० (5) भक्ष्यमाण omitted in B. (6) रक्षणोपेक्षा० B. (7) प्रमाणवन्त्या यदायातः B. (8) Omitted in A. (9) योगित्व only B. (10) प्रत्युदाहरण omitted in B. (11) Dropped in B. (12) ०वक्रतां A and B. (13) कार्यः A. (14) शोभा० lost in A.

यो लीलातालवृन्तो[1] रहसि निरुपधिर्यश्च[2] केलीप्रदीपः
कोपक्रीडासु योऽस्त्रं दशनकृतरुजो योऽधरस्यैकसेकः[3] ।
आकल्पे दर्पणं यः श्रमशयनविधौ यश्च गण्डोपधानं
देव्याः स व्यापदं वो हरतु हरजटाकन्दलीपुष्पमिन्दुः ॥४३॥

अत्र तालवृन्तादिकार्यसामान्यादभेदोपचारनिबन्धनो[4] रूपकालङ्कारविन्यासः सर्वेषामेव पर्यायाणां शोभातिशयकारित्वेनोपनिबद्धः। षष्ठीसमासपक्षोदाहरणं यथा

देवि त्वन्मुखपङ्कजेन शशिनः शोभातिरस्कारिणा
पश्याब्जानि[5] विनिर्जितानि सहसा गच्छन्ति विच्छायताम्[6] ॥४४॥

अत्र स्वरससंप्रवृत्तसायंसमयसमुचिता सरोरुहाणां[7] विच्छायताप्रतिपत्तिर्नायकेन[8] नागरकतया वल्लभोपलालनाप्रवृत्तेन तन्निदर्शनोपक्रमरमणीयत्वमुखेन[9] निर्जितानीवेति प्रतीयमानोत्प्रेक्षालङ्कारकारित्वेन[10] प्रतिपाद्यते। एतदेव च युक्तियुक्तम्। यस्मात्सर्वस्य कस्यचित्पङ्कजस्य शशाङ्कशोभातिरस्कारितां प्रतिपद्यते; त्वन्मुखपङ्कजेन पुनः शशिनः शोभातिरस्कारिणा न्यायतो निर्जितानि सन्ति विच्छायतां गच्छन्तीवेति[11] प्रतीयमानस्योत्प्रेक्षालक्षणस्यालङ्कारस्य शोभातिशयः समुल्लास्यते।

एवं पर्यायवक्रतां विचार्य क्रमसमुचितावसरामुपचारवक्रतां विचारयति—

यत्र दूरान्तरेऽन्यस्मात्सामान्यमुपचर्यते ।
लेशेनापि भवत् काञ्चिद्वक्तुमुद्रिक्तवृत्तिताम् ॥१३॥

(1) ०वृन्तं B. (2) निरुपधिः B. (3) ०जो योऽ lost in A. (4) सामान्या० lost in A. (5) वन्य for पश्य in A. (6) रत्नावली i, 25. (7) ०रुहा० lost in A. (8) विच्छायापत्ति० A. (9) ०रमणीयं त्वन्मुखेन B. (10) ०परत्वेन for ०कारित्वेन in A. (11) प्रतिपद्यन्त इति A.

यन्मूला सरसोल्लेखा रूपकादिरलङ्कृतिः ।
उपचारप्रधानासौ वक्रता काचिदुच्यते[1] ॥ १४ ॥

असौ काचिदपूर्वा वक्रतोच्यते वक्रभावोऽभिधीयते। कीदृशी—उपचारप्रधाना। उपचरणमुपचारः स एव प्रधानं यस्याः सा तथोक्ता। किंस्वरूपा च—यत्र यस्यामन्यस्मात्पदार्थान्तरात् प्रस्तुतत्वाद्वर्ण्यमाने वस्तुनि सामान्यमुपचर्यते साधारणो धर्मः कश्चिद्वक्तुमभिप्रेतः समारोप्यते। कस्मिन् वर्ण्यमाने वस्तुनि—दूरान्तरे। दूरमनल्पमन्तरं व्यवधानं यस्य तत्तथोक्तं तस्मिन्। ननु च व्यवधानममूर्तत्वाद्वर्ण्यमानस्य[2] वस्तुनो देशविहितं तावन्न सम्भवति; कालविहितमपि नास्त्येव, तस्य क्रियाविषयत्वात्। क्रियास्वरूपं कारकस्वरूपं चेत्युभयात्मकं यद्यपि वर्ण्यमानं वस्तु, तथापि देशकालव्यवधानेनात्र न भवितव्यम्। यस्मात्पदार्थानामनुमानवत् सामान्यमात्रमेव शब्दैर्विषयीकर्तुं पार्यते, न विशेषः। तत्कथं दूरान्तरत्वमुपपद्यते ? सत्यमेतत्, किन्तु 'दूरान्तर'-शब्दो मुख्यतया देशकालविषये विप्रकर्षे प्रत्यासत्तिविरहे वर्तमानोऽप्युपचारात् स्वभावविप्रकर्षे वर्तते। सोऽयं स्वभावविप्रकर्षो विरुद्धधर्माध्यासलक्षणः पदार्थानाम्। यथा मूर्तिमत्त्वममूर्तत्वापेक्षया, द्रवत्वं च घनत्वापेक्षया, चेतनत्वमचेतनत्वापेक्षयेति। कीदृक् तत्सामान्यम्—लेशेनापि भवत्। मनाङ्मात्रेणापि सत्। किमर्थम्—काञ्चिदपूर्वामुद्रिक्तवृत्तितां वक्तुं सातिशयपरिस्पन्दतामभिधातुम्। यथा

स्निग्धश्यामलकान्तिलिप्तवियतः[3] ॥ ४५ ॥

---

(1) These two कारिकाs are cited by Jayaratha (p. 8) in connexion with his exposition of the वक्रोक्तिजीवितकार views. (2) ०वर्ण्य A. (3) See above p. 89.

अत्र यथा बुद्धिपूर्वकारिणः केचिच्चेतनत्वं च्छायातिशयोत्पादने च्छया केनचिद्विद्यमानलेपनशक्तिना मूर्तेन नीलादिना रञ्जनद्रव्यविशेषेण किञ्चिदेव लेपनीयं मूर्तिमद्वस्तु वस्त्रप्रायं[1] लिम्पन्ति, तद्वदेव तत्कारित्व-सामान्यं मनाङ्मात्रेणापि विद्यमानं कामप्युद्रिक्तवृत्तितामभिधातुमुप-चारात्[2] स्निग्धश्यामलया कान्त्या लिप्तं वियद् द्यौरित्युपनिबद्धम्। 'स्निग्ध'-शब्दोऽप्युपचारवक्र एव। यथा मूर्तं वस्तु दर्शनस्पर्शनसंवेद्य-स्नेहनगुणयोगात्[3] स्निग्धमित्युच्यते[4], तथैव कान्तिरमूर्ताप्युपचारात् स्निग्धेत्युक्ता। यथा वा

गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः।
सौदामिन्या कनकनिकषस्निग्धया दर्शयोर्वीं
तोयोत्सर्गस्तनितमुखरो मास्म भूर्विक्लवास्ताः[5] ॥ ४६ ॥

अत्रामूर्तानामपि तमसामतिबाहुल्याद् घनत्वान्मूर्तसमुचितं सूचिभेद्य-त्वमुपचरितम्। यथा वा

गअणं च मत्तमेहं धारालुलिअज्जुणाइं अ वणाइं।
णिरहंकारमिअंका हरंति णीलाओ वि णिसाओ[6] ॥ ४७ ॥

अत्र मत्तत्वं निरहङ्कारत्वं च चेतनधर्मसामान्यमुपचरितम्। सोऽय-मुपचारवक्रताप्रकारः सत्कविप्रवाहे सहस्रशः सम्भवतीति सहृदयैः

---

(1) ०वस्तुप्रायं A. (2) ०मभि० lost in A. (3) B has only स्पर्शसंवेद्यं. (4) स्निग्धमि० lost in A. (5) मेघदूत 37. (6) गौडवहो श्लो० 406 = quoted in ध्वन्यालोक p. 63 (anon) = व्यक्तिविवेक p. 119 (anon) = Jayaratha p. 8 (anon) = माणिक्यचन्द्र p. 25 (anon). The छाया would be

गगनं च मत्तमेघं धारालुलितार्जुनानि च वनानि।
निरहङ्कारमृगाङ्का हरन्ति नीला अपि निशाः॥

स्वयमेवोत्प्रेक्षणीयः। अतएव च प्रत्यासन्नान्तरेऽस्मिन्नुपचारे न वक्रता-व्यवहारः, यथा गौर्वाहीक इति।

इदमपरमुपचारवक्रतायाः स्वरूपम्—यन्मूला सरसोल्लेखा रूपकादिरलङ्कृतिः। या मूलं यस्याः सा तथोक्ता। रूपकमादिर्यस्या सा तथोक्ता। का सा—अलङ्कृतिरलङ्करणं रूपकप्रभृतिरलङ्कार-विच्छित्तिरित्यर्थः[1]। कीदृशी—सरसोल्लेखा। सरसः सास्वादः सचमत्कृतिरुल्लेखः समुन्मेषो यस्याः सा तथोक्ता। समानाधिकरणयोरत्र हेतुहेतुमद्भावः, यथा

अतिगुरवो राजमाषा न भक्ष्या इति॥ ४८॥

यन्मूला सति रूपकादिरलङ्कृतिः सरसोल्लेखा। तेन रूपकादेरलङ्करण-कलापस्य सकलस्यैवोपचारवक्रता जीवितमित्यर्थः।

ननु च पूर्वस्मादुपचारवक्रताप्रकारादेतस्य को भेदः? पूर्वस्मिन् स्वभावविप्रकर्षात् सामान्येन मनाङ्मात्रमेव साम्यं समाश्रित्य साति-शयत्वं प्रतिपादयितुं तद्धर्ममात्राध्यारोपः प्रवर्तते, एतस्मिन् पुनरदूर-विप्रकृष्टसादृश्यसमुद्भवप्रत्यासत्तिसमुचितत्वादभेदोपचारनिबन्धनं[2] तत्त्व-मेवाध्यारोप्यते। यथा

सत्स्वेव[3] कालश्रवणोत्पलेषु
सेनावनालीविषपल्लवेषु[4]।
गाम्भीर्यपातालफणीश्वरेषु
खड्गेषु को वा भवतां सुरारिः[5]॥ ४९॥

अत्र कालश्रवणोत्पलादिसादृश्यजनित[6]प्रत्यासत्तिविहितमभेदोपचार-निबन्धनं[7] तत्त्वमध्यारोपितम्।

---

(1) इत्यर्थः omitted in A. (2) ०समुचितत्वादुपचार० B. (3) सत्स्वेद B. (4) सनावमालीविष० B. (5) भविता सुरारिः A. (6) ०सादृश्यं संजनितं B. (7) ०निमित्तं for ०निबन्धनं A.

'आदि'[1]-ग्रहणादप्रस्तुतप्रशंसाप्रकारस्य कस्यचिदन्यापदेशलक्षणस्यापचारवक्रतैव जीवितत्वेन लक्ष्यते।

तथा च किमपि पदार्थान्तरं प्राधान्येन प्रतीयमानतया चेतसि निधाय तथाविधलक्षणसाम्यसमन्वयं समाश्रित्य पदार्थान्तरमभिधीयमानतां प्रापयन्तः प्रायशः[2] कवयो दृश्यन्ते। यथा

अनर्घः कोऽप्यन्तस्तव हरिण हेवाकमहिमा
स्फुरत्येकस्यैव त्रिभुवनचमत्कारजनकः।
यदिन्दोर्मूर्तिस्ते दिवि विहरणारण्यवसुधा
सुधासारस्यन्दो किरणनिकरः शष्पकवलः[3] ॥ ५० ॥

अत्र लोकोत्तरत्वलक्षणमुभयानुयायि सामान्यं समाश्रित्य प्राधान्येन विवक्षितस्य वस्तुनः प्रतीयमानवृत्तेरभेदोपचारनिबन्धनं तत्त्वमध्यारोपितम्[4]। तथा चैतयोर्द्वयोरप्यलङ्कारयोस्तुल्येऽप्युपचारवक्रताजीवितत्वे वाच्यत्वमेकत्र प्रतीयमानत्वमपरस्मिन् स्वरूपभेदस्य[5] निबन्धनम्। एतच्चोभयोरपि स्वलक्षणव्याख्यानावसरे समुन्मील्यते।

एवमुपचारवक्रतां विविच्य समनन्तरप्राप्तावकाशां विशेषणवक्रतां विविनक्ति—

**विशेषणस्य माहात्म्यात् क्रियायाः कारकस्य वा[6]।**
**यत्रोल्लसति लावण्यं[7] सा विशेषणवक्रता ॥ १५ ॥**

सा विशेषणवक्रता विशेषणवक्रत्वविच्छित्तिरभिधीयते। कीदृशी— यत्र यस्यां लावण्यमुल्लसति रामणीयकमुद्भिद्यते। कस्य—क्रियायाः कारकस्य[8] वा। क्रियालक्षणस्य वस्तुनः कारकलक्षणस्य वा[9]।

---

(1) i.e. in रूपकादिः in the कारिका. (2) Omitted in A. (3) The first two lines are quoted anonymously in Amaracandra's काव्यकल्पलता (p. 51) = माणिक्यचन्द्र p. 20. (4) ०पचारात्तन्निबन्धनतत्त्वमध्यारोपितम् A. (5) ०भेद only in A. (6) च B. (7) ०ल्लसति ला० lost in A. (8) ०याः कार० lost in A. (9) च B.

कस्मात्—विशेषणस्य माहात्म्यात्। एतयोः प्रत्येकं यद्विशेषणं भेदकं[1] [तस्य माहात्म्यात्] पदार्थान्तरस्य सातिशयत्वात्। किं तत्सातिशयत्वम्[2]—भावस्वभावसौकुमार्यसमुल्लासकत्वमलङ्कारच्छायातिशयपरिपोषकत्वम्[3] च। यथा

श्रमजलसेकजनितनवविलिखितनखपददाहमूर्छिता
वल्लभरभसलुलितललितालकवलयचयार्धनिह्नुता[4]।
स्मररसविविधविहितसुरतक्रमपरिमलत्रपालसा[5]
जयति निशात्यये युवतिदृक् तनुमधुमदविशदपाटला॥ ५१॥

यथा वा

करान्तरालीनकपोलभित्ति-
र्बाष्पोच्छलत्कूणितपत्रलेखा[6]।
श्रोत्रान्तरे पिण्डितचित्तवृत्तिः
शृणोति गीतध्वनिमत्र तन्वी॥ ५२॥

यथा च

शुचिशीतलचन्द्रिकाप्लुता-
श्चिरनिःशब्दमनोहरा दिशः।
प्रशमस्य मनोभवस्य वा
हृदि तस्याप्यथ हेतुतां ययुः[7]॥ ५३॥

क्रियाविशेषणवक्रत्वं यथा

सस्मार वारणपतिर्विनिमीलिताक्षः[8]
स्वेच्छाविहारवनवासमहोत्सवानाम्[9]॥ ५४॥

---

(1) तद्भेदकं A. (2) तत्र for तत्० in B. (3) पोषकत्वं for परिपोषत्वं in A. (4) A reads वल्लभसरभस० and ०वलयचयार्धता. B reads ०वलयघमार्धनिह्नुता. (5) ०परिमलन A. (6) बाष्पोत्तल० A. (7) कस्या for तस्या in B. (8) ०लिताच B. (9) Quoted anonymously by Samudrabandha, p. 9.

अत्र सर्वत्रैव स्वभावसौन्दर्यसमुल्लासकत्वं विशेषणानाम्। अलङ्कार[1]-च्छायातिपरिपोषकत्वं[2] विशेषणस्य यथा

शशिनः शोभातिरस्कारिणा[3] ॥ ५५ ॥

एतदेव विशेषणवक्रत्वं नाम प्रस्तुतौचित्यानुसारि सकलसत्काव्य-जीवितत्वेन लक्ष्यते, यस्मादनेनैव रसः परां परिपोषपदवीमवतार्यते। यथा

करान्तरालीन[4] इति ॥ ५६ ॥

स्वमहिम्ना विधीयन्ते येन लोकोत्तरश्रियः।
रसस्वभावालङ्कारास्तद्विधेयं विशेषणम् ॥ ५७ ॥

[इति] अन्तरश्लोकः[5]।

एवं विशेषणवक्रतां विचार्य क्रमसमर्पितावसरां संवृतिवक्रतां विचारयति—

**यत्र[6] संव्रियते वस्तु वैचित्र्यस्य विवक्षया।**
**सर्वनामादिभिः कैश्चित् सोक्ता संवृतिवक्रता ॥१६॥**

सोक्ता संवृतिवक्रता—या किलैवंविधा सा संवृतिवक्रतेत्युक्ता[7] कथिता। संवृत्त्या वक्रता संवृतिप्रधाना वेति समासः। यत्र यस्यां वस्तु पदार्थलक्षणं संव्रियते समाच्छाद्यते। केन हेतुना—वैचित्र्यस्य विवक्षया विचित्रभावस्याभिधानेच्छया। यया[8] पदार्थो विचित्रभावं समासादयतीत्यर्थः। केन संव्रियते—सर्वनामादिभिः कैश्चित्। सर्वस्य नाम सर्वनाम तदादिर्येषां ते तथोक्तास्तैः कैश्चिदपूर्वैर्वाचकैरित्यर्थः।

अत्र बहवः प्रकाराः सम्भवन्ति। यत्र किमपि सातिशयं वस्तु वक्तुं शक्यमपि साक्षादभिधानादियत्तापरिच्छिन्नतया परिमितप्रायं

(1) अलङ्कारस्य A. (2) A drops ०परि०. (3) See above p. 99. (4) See above p. 104. (5) Omitted in A. (6) यत्तु A. (7) इत्युक्ता omitted in A. (8) यथा A.

मा प्रतिभासतामिति सामान्यवाचिना सर्वनाम्नाच्छाद्य तत्कार्याभिधायिना तदतिशयाभिधानपरेण वाक्यान्तरेण प्रतीतिगोचरतां नीयते। यथा

तत्पितर्यथ परिग्रहलिप्सौ
स व्यधत्त करणीयमणीयः।
पुष्पचापशिखरस्थकपोलो
मन्मथः किमपि येन निदध्यौ ॥ ५८ ॥

अत्र सदाचारप्रवणतया गुरुभक्तिभावितान्तःकरणो लोकोत्तरौदार्यगुणयोगाद्विविधविषयोपभोगविदृष्णमना निजेन्द्रियनिग्रहमसम्भावनीयमपि[1] शान्तनवो विहितवानित्यभिधातुं शक्यमपि सामान्याभिधायिना सर्वनाम्नाच्छाद्योत्तरार्धेन कार्यान्तराभिधायिना[2] वाक्यान्तरेण प्रतीतिगोचरतामानीयमानं कामपि[3] चमत्कारकारितामावहति।

अयमपरः प्रकारो यत्र स्वपरिस्पन्दकाष्ठाधिरूढेः सातिशयं वस्तु वचसामगोचर इति प्रथयितुं सर्वनाम्ना समाच्छाद्य तत्कार्याभिधायिना[4] तदतिशयवाचिना वाक्यान्तरेण समुन्मील्यते। यथा

याते द्वारवतीं तदा मधुरिपौ तद्दत्तसम्पादनां[5]
कालिन्दीजलकेलिवञ्जुललतामालम्ब्य सोत्कण्ठया।
तद्गीतं गुरुबाष्पगद्गदगलत्तारस्वरं राधया
येनान्तर्जलचारिभिर्जलचरैरप्युत्कमुत्कूजितम्[6] ॥ ५९ ॥

---

(1) ०मसम्भाव० lost in A. (2) कार्याभिधायिना A. (3) ०यमानं का० lost in A. (4) ०त्कार्याभिधा० lost in A. (5) दत्तः सम्पानतां B; दत्तसंवादनां A. Hemacandra and वाग्भट read ०झम्पानतां; while the readings in सदुक्तिकर्णामृत and लोचन are respectively तद्वस्त्रसंव्यानया and तद्दत्तझम्पानतां. (6) Quoted anonymously by Hemacandra (p. 73) = वाग्भट's अलङ्कारतिलक p. 54 = सदुक्तिकर्णामृत p. 75 (ed. Bibl. Ind.)

अत्र सर्वनाम्ना संवृतं वस्तु तत्कार्याभिधायिना वाक्यान्तरेण समुन्मील्य सहृदयहृदयहारितां[1] प्रापितम्। यथा वा

तह रुसं कह्व विसाहीआए रोधगग्गरगिराए।
जह कस्स वि जम्मसए वि कोइ मा वल्लहो होउ[2] ॥ ६० ॥

अत्र पूर्वार्धे संवृतं वस्तु रोदनलक्षणं तदतिशयाभिधायिना वाक्यान्तरेण कामपि तद्विदाह्लादकारितां नीतम्।

इदमपरमत्र प्रकारान्तरं यत्र सातिशयसुकुमारं वस्तु कार्यातिशयाभिधानं विना संवृतिमात्ररमणीयतया कामपि काष्ठामधिरोप्यते।

यथा

दर्पणे च परिभोगदर्शिनी
पृष्ठतः प्रणयिनो निषेदुषः।
वीक्ष्य बिम्बमनुबिम्बमात्मनः
कानि कानि न चकार लज्जया[3] ॥ ६१ ॥

अयमपरः प्रकारो यत्र स्वानुभवसंवेदनीयं वस्तु वचसा वक्तुमविषय इति ख्यापयितुं संव्रियते[4]। यथा

तान्यक्षराणि हृदये किमपि ध्वनन्ति[5] ॥ ६२ ॥

इति पूर्वमेव व्याख्यातम्।

इदमपि प्रकारान्तरं सम्भवति यत्र परानुभवसंवेद्यस्य वस्तुनो वक्तुरगोचरतां प्रतिपादयितुं संवृतिः क्रियते। यथा

---

(1) सहृदयहारितां B. (2) The छाया would be

तथा रुदितं कया विशाखया रोधगद्गदगिरा।
यथा कस्यापि जन्मशतेऽपि कोऽपि मा वल्लभो भवतु ॥

A reads विसाहिआलंबोधगगग्ग० and होइ; while B reads विसाहिआइ बोगगर०. (3) कुमार० viii, 11 = शार्ङ्गधरपद्धति 3744. (4) संवृतिः क्रियते A. (5) See above p. 34, where add reference to लोचन p. 60.

मन्मथः किमपि येन निदध्यौ[1] ॥ ६३ ॥

अत्र त्रिभुवनप्रथितप्रतापमहिमा तथाविधशक्तिव्याघातविषण्णचेताः कामः किमपि स्वानुभवसमुचितमचिन्तयदिति ।

इदमपरं प्रकारान्तरमत्र विद्यते—यत्र स्वभावेन कविविवक्षया वा केनचिदौपहत्येन युक्तं वस्तु महापातकमिव कीर्तनीयतां नार्हतीति समर्पयितुं संव्रियते । यथा

दुर्वचं तदथ मास्म भून्मृग-
स्त्वय्यसौ यदकरिष्यदोजसा ।
नैनमाशु यदि वाहिनीपतिः
प्रत्यपत्स्यत शितेन पत्रिणा[2] ॥ ६४ ॥

यथा वा

निवार्यतामालि किमप्ययं वटुः
पुनर्विवक्षुः स्फुरितोत्तराधरः[3] ।
न केवलं यो महतोऽपभाषते[4]
शृणोति तस्मादपि यः स पापभाक्[5] ॥ ६५ ॥

अत्रार्जुनमारणं भगवदपभाषणं च न कीर्तनीयतामर्हतीति संवरणेन रमणीयतां नीतम्[6] । कविविवक्षयोपहतं यथा

सोऽयं दम्भधृतव्रतः[7] प्रियतमे कर्तुं किमप्युद्यतः[8] ॥ ६६ ॥

इति प्रथममेव व्याख्यातम् ।

एवं संवृतिवक्रतां विचार्य प्रत्ययवक्रतायाः कोऽपि प्रकारः पदमध्यान्तर्भूतत्वादिहैव समुचितावसरस्तस्मात्तद्विचारमाचरति—

---

(1) See above p. 106. (2) किरात० xiii, 49. (3) स्फुरिताधरोत्तरः A. (4) महतां निभाषते B. (5) कुमार० v, 83 = व्यक्तिविवेक p. 9. (6) B adds इति. (7) B drops व्रतः. (8) See above p. 34, 40.

प्रस्तुतौचित्यविच्छित्तिं स्वमहिम्ना विकासयन्[1] ।
प्रत्ययः पदमध्येऽन्यामुल्लासयति वक्रताम् ॥ १७ ॥

कश्चित् प्रत्ययः कृदादिः पदमध्यवृत्तिरन्यामपूर्वां वक्रतामुल्लासयति वक्रभावमुद्दीपयति। किं कुर्वन्—प्रस्तुतस्य वर्ण्यमानस्य वस्तुनो यदौचित्यमुचितभावस्तस्य विच्छित्तिमुपशोभां विकासयन् समुल्लासयन्। केन—स्वमहिम्ना निजोत्कर्षेण। यथा

वेल्लद्बलाका घनाः[2] ॥ ६७ ॥

यथा वा

स्निह्यत्कटाक्षे दृशौ[3] इति[4] ॥ ६८ ॥

अत्र वर्तमानकालाभिधायी शतृप्रत्ययः कामप्यतीतानागतविभ्रमविरहितां तात्कालिकपरिस्पन्दसुन्दरीं प्रस्तुतौचित्यविच्छित्तिं समुल्लासयन् सहृदयहृदयहारिणीं[5] प्रत्ययवक्रतामावहति।

इदानीमेतस्याः प्रकारान्तरं पर्यालोचयति—

आगमादिपरिस्पन्दसुन्दरः शब्दवक्रताम् ।
परः कामपि पुष्णाति बन्धच्छायाविधायिनीम् ॥ १८ ॥

परो द्वितीयः प्रत्ययप्रकारः कामप्यपूर्वां शब्दवक्रतामाबध्नाति वाचकवक्रभाव विदधाति। कीदृक्—आगमादिपरिस्पन्दसुन्दरः। आगमो मुमादिरादिर्यस्य स तथोक्तः, तस्यागमादेः परिस्पन्दः स्वविलसितं तेन सुन्दरः सुकुमारः। कीदृशीं शब्दवक्रताम्—बन्धच्छायाविधायिनीं सन्निवेश[6]कान्तिकारिणीमित्यर्थः। यथा

---

(1) प्रकाशयन् B. (2) See above p. 89. (3) See above p. 75. (4) दृशौ इ० lost in A. (5) हारिणी lost in A. (6) All the sentences from परो द्वितीयः up to this are lost in A.

जाने सख्यास्तव मयि मनः सम्भृतस्नेहमस्मा-
दित्थम्भूतां प्रथमविरहे तामहं तर्कयामि ।
वाचालं मां न खलु सुभगम्मन्यभावः करोति
प्रत्यक्षं ते निखिलमचिराद् भ्रातरुक्तं मया यत्[1] ॥६९॥

यथा च

दाक्षोऽभ्यःप्रभृतिम्पचः[2] इति ॥ ७० ॥

यथा वा

पायं पायं कलाचीकृतकदलदलम्[3] ॥७१॥

इति। अत्र सुभगम्मन्यभावप्रभृतिशब्देषु[4] सुमादि[5]परिस्पन्दसुन्दराः सन्निवेशच्छायाविधायिनीं[6] वाचकवक्रतां प्रत्ययाः पुष्णन्ति।

एवं प्रसङ्गसमुचितां पदमध्यवर्तिप्रत्ययवक्रतां विचार्य समनन्तरसम्भविनीं[7] वृत्तिवक्रतां विचारयति—

**अव्ययीभावमुख्यानां वृत्तीनां रमणीयता ।**
**यत्रोल्लसति सा ज्ञेया वृत्तिवैचित्र्यवक्रता ॥१९॥**

सा वृत्तिवैचित्र्यवक्रता ज्ञेया बोद्धव्या। वृत्तीनां वैचित्र्यं[8] विचित्रभावः सजातीयापेक्षया सौकुमार्योत्कर्षस्तेन वक्रता वक्रभावविच्छित्तिः। कीदृशी—रमणीयता यत्रोल्लसति। रामणीयकं यस्यामुन्मिषते। कस्य[9]—वृत्तीनाम्। कासाम्—अव्ययीभावमुख्यानाम्। अव्ययीभावः समासः[10] मुख्यः प्रधानभूतो यासां[11] तास्तथोक्तास्तासां समास-

---

(1) मेघदूत 90. (2) See above p. 33 (3) See above p. 82. (4) ॰प्रभृ॰ lost in A, which reads apparently प्रभृतिषु. (5) पाणिनि iii. 2. 83, vi. 3. 66, 67. (6) ॰विधायिनी B. (7) भाविनीं B. (8) Omitted in A. (9) तस्याः A. (10) Omitted in A. (11) A here adds वृत्तीनां.

तद्धितसुब्धातुवृत्तीनां[1] वैयाकरणप्रसिद्धानाम्। तदयमत्रार्थः—[2]यत्र स्वपरिस्पन्दसौन्दर्यमेतासां समुचितभित्तिभागोपनिबन्धादभिव्यक्ति-मासादयति। यथा

अभिव्यक्तिं तावद् बहिरलभमानः[3] कथमपि
स्फुरन्नन्तः स्वात्मन्यधिकतरसम्मूर्छितभरः[4]।
मनोज्ञामुद्वृत्तां परपरिमलस्पन्दसुभगा[5]-
मह्नो धत्ते शोभामधिमधु लतानां नवरसः ॥७२॥

अत्र 'अधिमधु'-शब्दे विभक्त्यर्थविहितः समासः समयाभिधाय्यपि विषयसप्तमीप्रतीतिमुत्पादयन् 'नवरस'-शब्दस्य श्लेषच्छायाच्छुरण-वैचित्र्यमुन्मीलयति। एतद्वृत्तिविरहिते विन्यासान्तरे वस्तुप्रतीतौ सत्या-मपि न तादृक्तद्विदाह्लादकारित्वम्[6]। उद्वृत्त-परिमल-स्पन्द-सुभग-शब्दानामुपचारवक्रत्वं परिस्फुटमेव विभाव्यते। यथा च

आ स्वर्लोकादुरगनगरं नूतनालोकलक्ष्मी-
मातन्वद्भिः किमिव सिततां चेष्टितैस्ते न नीतम्[7]।
अप्येतासां दयितविहिता[8] विद्विषत्सुन्दरीणां
यैरानीता नखपदमयी मण्डना पाण्डिमानम्[9] ॥ ७३ ॥

अत्र पाण्डुत्व-पाण्डुता-पाण्डुभाव-शब्देभ्यः पाण्डिम-शब्दस्य किमपि वृत्तिवैचित्र्यवक्रत्वं विद्यते। यथा च

कान्त्योन्मीलति[10] सिंहलीमुखरुचां चूर्णाभिषेकोल्लस-[11]
ल्लावण्यामृतवाहिनिर्झरजुषामाचान्तिभिश्चन्द्रमाः।

---

(1) A has समासतद्धितसुब्धातूनां. (2) B adds यदि before यत्र. (3) बहि॰ for बहि in B. (4) ॰मूर्छितेचरः B. (5) ॰मुद्वृत्तस्वरपरिमल॰ B. (6) तादृक् omitted in A. (7) A reads सिकता, नीतः. (8) दयितविरहे A. (9) सुभाषितावली no. 2954. (10) Lost in A: B reads कान्त्यौयति. Our emendation is conjectural. (11) पूर्णा for चूर्णा in B.

येनापानमहो ऽस्वयत्यति करेष्वेकातपत्रायते[1]
देवस्य त्रिदशाधिपावधिजगज्जिष्णोर्मनोजन्मनः ॥ ७४ ॥

अत्र सुब्धातुवृत्तेः समासवृत्तेश्च किमपि वक्रतावैचित्र्यं[2] परिस्फुरति।

एवं वृत्तिवक्रतां विचार्य पदपूर्वार्धभाविनोमुचितावसरां[3] भाववक्रतां विचारयति—

साध्यतामप्यनादृत्य सिद्धत्वेनाभिधीयते।
यत्र भावो भवत्येषा भाववैचित्र्यवक्रता ॥ २० ॥

एषा वर्णितस्वरूपा भाववैचित्र्यवक्रता[4] भवत्यस्ति। भावो धात्वर्थरूपस्तस्य वैचित्र्यं विचित्रभावः प्रकारान्तराभिधानव्यतिरेकि रामणीयकं तेन वक्रता वक्रत्वविच्छित्तिः। कीदृशी—यत्र यस्यां भावः[5] सिद्धत्वेन परिनिष्पन्नत्वेनाभिधीयते[6] भण्यते। किं कृत्वा—साध्यतामप्यनादृत्य। निष्पाद्यमानतां प्रसिद्धामप्यवधीर्य। तदिदमत्र तात्पर्यम्—यत् साध्यत्वेनापरिनिष्पत्तेः[7] प्रस्तुतस्यार्थस्य दुर्बलः परिपोषः, तस्मात् सिद्धत्वेनाभिधानं परिनिष्पन्नत्वात्पर्याप्तं प्रकृतार्थपरिपोषमावहति। यथा

श्वासायासमलीमसाधररुचे[8]र्दोःकन्दलीतानवात्
केयूरायितमङ्गदैः परिणतं पाण्डिम्नि गण्डत्विषा।
अस्याः किं च विलोचनोत्पलयुगेनात्यन्तमश्रुस्नुता
तारं तादृगपाङ्गयोररुणितं येनोत्प्रतापः स्मरः ॥ ७५ ॥

अत्र भावस्य सिद्धत्वेनाभिधानमतीव चमत्कारकारि।

---

(1) पार for पान in A. (2) वक्र lost in A. (3) ०विनो० lost in A. (4) वैचित्र्य lost in A. (5) यस्यां भावः lost in A. (6) परिस्पन्दत्वेना० A. (7) A is corrupt here and has lost परिनि० but reads साध्यत्वेनाभिधा before it. (8) रुचेः lost in A.

एवं भाववक्रतां विचार्य प्रातिपदिकान्तर्वर्तिनीं लिङ्गवक्रतां विचारयति—

**भिन्नयोर्लिङ्गयोर्यस्यां सामानाधिकरण्यतः।**
**कापि शोभाभ्युदेत्येषा[1] लिङ्गवैचित्र्यवक्रता ॥२१॥**

एषा कथितस्वरूपा[2] लिङ्गवैचित्र्यवक्रता स्त्यादिविचित्रभाववक्रताविच्छित्तिः। भवतीति सम्बन्धः, क्रियान्तराभावात्। कीदृशी—यस्यां यत्र विभिन्नयोर्विभक्तस्वरूपयोर्लिङ्गयोः सामानाधिकरण्यतस्तुल्याश्रयत्वादेकद्रव्यवृत्तित्वात् काप्यपूर्वा शोभाभ्युदेति कान्तिरुल्लसति। यथा

यस्यारोपणकर्मणापि बहवो वीरव्रतं त्याजिताः
कार्यं पुङ्खितबाणमीश्वरधनुस्तद्दोर्भिरेभिर्मया।
स्त्रीरत्नं तदगर्भसम्भवमितो लभ्यं च लीलायिता
तेनैषा मम फुल्लपङ्कजवनं जाता दृशां विंशतिः[3] ॥ ७६ ॥

यथा वा

नभस्वता लासितकल्पवल्ली[4]-
प्रबालबालव्यजनेन[5] तस्य।
उरःस्थलेऽकीर्यत दक्षिणेन
सर्वास्पदं सौरभमङ्गरागः ॥ ७७ ॥

यथा च

आयोज्य मालामृतुभिः प्रयत्न-
सम्पादितामंसतटेऽस्य चक्रे।
करारविन्दं मकरन्दबिन्दु-
स्यन्दि श्रिया विभ्रमकर्णपूरः ॥ ७८ ॥

---

(1) उदेति शोभा काप्येषा A. (2) स्वरूपकथिता B. (3) लालित A. (4) बाल-रामायण i, 30 (p. 15). (5) बाल omitted in B.

इयमपरा च लिङ्गवैचित्र्यवक्रता—

**सति लिङ्गान्तरे यत्र स्त्रीलिङ्गञ्च प्रयुज्यते ।**
**शोभानिष्पत्तये यस्मान्नामैव स्त्रीति पेशलम् ॥२२॥**

यत्र यस्यां लिङ्गान्तरे सत्यन्यस्मिन् सम्भवत्यपि लिङ्गे स्त्रीलिङ्गं प्रयुज्यते निबध्यते । अनेकलिङ्गत्वेऽपि पदार्थस्य स्त्रीलिङ्गविषयः प्रयोगः क्रियते । किमर्थम्—शोभानिष्पत्तये । कस्मात् कारणात्—यस्मान्नामैव स्त्रीति पेशलम् । स्त्रीत्यभिधानमेव हृदयहारि । विच्छित्त्यन्तरेण रसादियोजनयोग्यता[1] । उदाहरणं यथा

यथेयं ग्रीष्मोष्मव्यतिकरवती पाण्डुरभिदा
मुखोद्भिन्नम्लानानिलतरलवल्लीकिसलया[2] ।
तटी तारं ताम्यत्यतिशशियशाः[3] कोऽपि जलद-
स्तथा मन्ये[4] भावी भुवनवलयाक्रान्तिसुभगः[5] ॥७८॥

अत्र त्रिलिङ्गत्वे सत्यपि 'तट'-शब्दस्य, सौकुमार्यात् स्त्रीलिङ्गमेव प्रयुक्तम् । तेन विच्छित्त्यन्तरेण भावी नायकव्यवहारः[6] कश्चिदासूत्रित इत्यतीव रमणीयत्वाद्वक्रतामावहति[7] ।

इदमपरमेतस्याः प्रकारान्तरं लक्षयति—

**विशिष्टं योज्यते लिङ्गमन्यस्मिन् सम्भवत्यपि ।**
**यत्र विच्छित्तये सान्या वाच्यौचित्यानुसारतः ॥२३॥**

---

(1) ०योग्यत्वात् B. (2) तरुण for तरल in B. (3) ०ष्मनिशयि for ष्मतिशयि in A. (4) मध्ये A. (5) कान्ति for क्रान्ति in A. (6) भाविनायिका० A. (7) अभिनवगुप्त (लोचन p. 160) says : तथा हि—'तटी तारं ताम्यति' इत्यत्र तटशब्दस्य पुंस्त्वनपुंसकत्वे अनादृत्य स्त्रीत्वमेवाश्रितं सहृदयैः, 'स्त्रीति नामापि मधुरम्' इति कृत्वा। It is posible that this is a reminiscence of Kuntaka's कारिका and its illustration.

सा चोक्तस्वरूपान्यापरा लिङ्गवक्रता विद्यते। यत्र यस्यां त्रिशिष्टं योज्यते लिङ्गत्रयाणामेकतमं किमपि कविविवक्षया निबध्यते। कथम्—अन्यस्मिन् सम्भवत्यपि, लिङ्गान्तरे विद्यमानेऽपि। किमर्थम्—विच्छित्तये, शोभायै। कस्मात् कारणात्—वाच्यौचित्यानुसारतः। वाच्यस्य[1] वर्ण्यमानस्य वस्तुनो यदौचित्यमुचितभावस्तस्यानुसरणमनुसारस्तस्मात्। पदार्थौचित्यमनुसृत्येत्यर्थः। यथा

त्वं रक्षसा भीरु यतोऽपनीता[2]
तं मार्गमेताः कृपया लता मे।
अदर्शयन् वक्तुमशक्नुवन्त्यः
शाखाभिरावर्जितपल्लवाभिः[3] ॥ ८० ॥

अत्र सीतया सह रामः पुष्पकेणावतरंस्तस्याः स्वयमेव[4] तद्विरहवैधुर्यमावेदयति—यत्त्वं रावणेन तथाविधत्वरापरतन्त्रचेतसा मार्गं यस्मिन्नपनीता तत्र तदुपमर्दवशात्तथाविधसंस्थानयुक्तत्वं[5] लतानामुन्मुखत्वं[6] मम त्वन्मार्गानुमानस्य निमित्ततामापन्नमिति वस्तु विच्छित्त्यन्तरेण रामेण[7] योज्यते; यथा—हे भीरु स्वाभाविकसौकुमार्यकातरान्तःकरणे, रावणेन तथाविधक्रूरकर्मकारिणा यस्मिन्मार्गे त्वमपनीता तमेताः साक्षात्कारपरिदृश्यमानमूर्तयो लताः किल मामदर्शयन्निति। तन्मार्गप्रदर्शनं परमार्थतस्तासां निश्चेतनतया न सम्भाव्यत इति प्रतीयमानवृत्तिरुत्प्रेक्षालङ्कारः कवेरभिप्रेतः। यथा—तव भीरुत्वं रावणस्य क्रौर्यं ममापि त्वत्परित्राणप्रयत्नपरतां पर्यालोच्य स्त्रीस्वभावाद्दार्द्रहृदयत्वेन समुचितस्वविषयपक्षपातमाहात्म्यादेताः कृपयैव[8] मम मार्गप्रदर्शनमकुर्वन्निति। केन करणभूतेन[9]—शाखाभिरावर्जितपल्लवाभिः।

---

(1) lost in A. (2) ०तोऽपनीता० lost in A. (3) रघु० xiii, 24. (4) ०स्याः स्व० lost in A. (5) पदस्थान for संस्थान in A. (6) उन्मुखत्व० omitted in B. (7) Omitted in A. (8) Omitted in A. (9) कारणभूतेन B.

यस्माद्वागिन्द्रियवर्जितत्वादव्यक्तमशक्नुवन्त्यः। यत्किल ये केचिदजल्पन्तो मार्गप्रदर्शनं प्रकुर्वन्ति ते तदुन्मुखीभूतहस्तपल्लवैर्बाहुभिरित्येतदतीव युक्तियुक्तम्। तथा चात्रैव वाक्यान्तरमपि विद्यते

मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षा-
स्तवागतिज्ञं समबोधयन्माम्।
व्यापारयन्त्यो दिशि दक्षिणस्या-
मुत्पक्ष्मराजीनि विलोचनानि[1] ॥ ८१ ॥

हरिण्यश्च मां समबोधयन्। कीदृशम्—तवागतिज्ञम्, लताप्रदर्शितमार्गमजानन्तम्। ततस्ताः[2] सम्यगबोधयन्निति, यतस्तास्तदपेक्षया किञ्चित्प्रबुद्धा इति। ताश्च कीदृश्यः—तथाविधवैशसन्दर्शनवशाद् दुःखितत्वेन परित्यक्ततृणग्रासाः। किं कुर्वाणाः—तस्यां दिशि नयनानि समर्पयन्त्यः। कीदृशानि—ऊर्ध्वीकृतपक्ष्मपङ्क्तीनि। तदेवं तथाविधस्थानकयुक्तत्वेन दक्षिणां दिशमन्तरिक्षेण नीतेति संज्ञया निवेदयन्त्यः। अत्र वृक्षमृगादिषु लिङ्गान्तरेषु सम्भवत्स्वपि स्त्रीलिङ्गमेव पदार्थौचित्यानुसारेण चेतनचमत्कारकारितया कवेरभिप्रेतम्। तस्मात् कामपि वक्रतामावहति।

एवं प्रातिपदिकलक्षणस्य सुबन्तसम्भविनः पदपूर्वार्धस्य यथासम्भवं वक्रभावं विचार्येदानीमुभयोरपि सुप्तिङन्तयोर्धातुस्वरूपः पूर्वभागो यः सम्भवति तस्य वक्रतां विचारयति। तस्य च क्रियावैचित्र्यनिबन्धनमेव वक्रत्वं विद्यते। तस्मात् क्रियावैचित्र्यस्यैव कीदृशाः कियन्तश्च[3] प्रकाराः सम्भवन्तीति तत्स्वरूपनिरूपणार्थमाह—

कर्तुरत्यन्तरङ्गत्वं कर्त्रन्तरविचित्रता।
स्वविशेषणवैचित्र्यमुपचारमनोज्ञता ॥२४॥

(1) रघु० xiii, 25. (2) ताः omitted in A. (3) किय० lost in A. B reads कियन्तो वा.

कर्मादिसंवृतिः पञ्च[1] प्रस्तुतौचित्यचारवः ।
क्रियावैचित्र्यवक्रत्वप्रकारास्त इमे स्मृता.[2] ॥२५॥

क्रियावैचित्र्यवक्रत्वप्रकारा धात्वर्थविचित्रभाववक्रताप्रभेदास्त इमे स्मृता वर्ण्यमानस्वरूपाः[3] कीर्तिताः । कियन्तः—पञ्च पञ्चसंख्याविशिष्टाः । कीदृशाः—प्रस्तुतौचित्यचारवः । प्रस्तुतं वर्ण्यमानं वस्तु तस्य यदौचित्यमुचितभावस्तेन चारवो[4] रमणीयाः । तत्र प्रथमस्तावत् प्रकारो यः—कर्तुरत्यन्तरङ्गत्वं नाम । कर्तुः स्वतन्त्रतया मुख्यभूतस्य कारकस्य क्रियां[5] प्रति निर्वर्तयितुर्यदत्यन्तरङ्गत्वम् अत्यन्तमान्तरतम्यम्[6] । यथा

चूडारत्ननिषण्णदुर्वहजगद्भारोन्नमत्कन्धरो
धत्तामुद्धुरतामसौ भगवतः शेषस्य मूर्धा परम् ।
स्वैरं संस्पृशतीषदप्यवनतिं[7] यस्मिन् लुठन्त्यक्रमं[8]
शून्ये नूनमियन्ति नाम भुवनान्युद्दामकम्पोत्तरम् ॥८२॥

अत्रोद्धुरता धारणलक्षणक्रिया कर्तुः फणीश्वरमस्तकस्य प्रस्तुतौचित्यमाहात्म्यादन्तर्भावं[9] यथा भजति[10] तथा नान्या काचिदिति क्रियावैचित्र्यवक्रतामावहति । यथा वा

किं शोभिताहमनयेति पिनाकपाणेः
पृष्टस्य पातु परिचुम्बनमुत्तरं वः[11] ॥ ८३ ॥

अत्र चुम्बनव्यतिरेकेण भगवता तथाविधलोकोत्तरं गौरीशोभाति-

(1) A reads this पाद as नवोल्लेखविशिष्टार्थ०. (2) A transposes the lines of this कारिका. वक्रत्व lost in A. (3) इमे स्मृता व० lost in A. (4) lost in A. (5) क्रियाः A. (6) ०रत० lost in A. (7) ०वनतं A. (8) लुठति A. (9) महात्म्यादवाद A. (10) युज्यते A. (11) See above p. 55. In the previous quotation, the reading is शशाङ्कमौलेः ( for पिनाकपाणेः ) which seems preferrable in the context.

मयाभिधानं न केनचित् क्रियान्तरेण कर्तुं पार्यत इति क्रियावैचित्र्य-निबन्धनं वक्रभावमावहति। यथा च

रुद्दस्स तइअणअणं पव्वइपरिचुम्बिअं जअइ[1] ॥ ८४ ॥

यथा वा

सिढिलिअचाओ जअइ[2] मअरद्धओ[3] ॥ ८५ ॥

एतयोर्वैचित्र्यं पूर्वमेव व्याख्यातम्।

अयमपरः क्रियावैचित्र्यवक्रतायाः प्रकारः—कर्त्रन्तरविचित्रता। अन्यः कर्त्ता कर्त्रन्तरं तस्माद्विचित्रता वैचित्र्यम्। प्रस्तुतत्वात् सजातीयत्वाच्च[4] कर्तुरेव। एतदेव च तस्य वैचित्र्यं यत् क्रियामेव कर्त्रन्तरापेक्षया विचित्रस्वरूपां सम्पादयति। यथा

नैकत्र शक्तिविरतिः क्वचिदस्ति सर्वे
भावाः स्वभावपरिनिष्ठिततारतम्याः।
आकल्पमौर्वदहनेन निपीयमान[5]-
मम्भोधिमेकचुलकेन पपावगस्त्यः[6] ॥ ८६ ॥

अत्रैकचुलकेनाम्भोधिपानं सतताध्यवसायाभ्यासकाष्ठाधिरूढिप्रौढाद्वाडवाग्नेः किमपि क्रियावैचित्र्यमुद्वहत् कामपि वक्रतामुन्मीलयति। यथा वा

प्रपन्नार्तिच्छिदो नखाः[7] ॥ ८७ ॥

यथा वा

स दहतु दुरितं शाम्भवो वः शराग्निः[8] ॥ ८८ ॥

एतयोर्वैचित्र्यं पूर्वमेव प्रदर्शितम्।

---

(1) See above p. 36. (2) जअड B. (3) See above p. 37. (4) विजातीय॰ A. (5) निपीड्यमान B. (6) सुभाषितावली no. 992. (7) See above p. 36, B reads आपन्नार्त्ति. (8) See above p. 37.

अयमपरः क्रियावैचित्र्यवक्रतायाः प्रभेदः—स्वविशेषणवैचित्र्यम्। मुख्यतया प्रस्तुतत्वात् क्रियायाः स्वस्यात्मनो यद्[1] विशेषणं भेदकं तेन वैचित्र्यं विचित्रभावः। यथा

दूत्युक्ते शशिनि पेशलकान्तिदूती-
संलापसम्वलितलोचनमानसाभिः[2]।
अग्राहि मण्डनविधिर्विपरीतभूषा-
विन्यासहासितसखीजनमङ्गनाभिः[3] ॥ ८९ ॥

अत्र मण्डनविधिग्रहणलक्षणायाः क्रियाया विपरीतभूषाविन्यासहासितसखीजनमिति विशेषणेन किमपि सौकुमार्यमुन्मीलितम्। यस्मात्तथाविधादरोपरचितं[4] प्रसाधनं[5] यस्य व्यञ्जकत्वेनोपात्तं मुख्यतया वर्ण्यमानवृत्तेर्वल्लभानुरागस्य सोऽप्यनेन सुतरां समुत्तेजितः। यथा वा

मध्यास्तत्रस्वकितहरिणीहारिनेत्रत्रिभागः[6] ॥ ९० ॥

अस्य वैचित्र्यं पूर्वमेवोदितम्। एतच्च क्रियाविशेषणं द्वयोरपि क्रियाकारकयोर्वक्रत्वमुल्लासयति[7]। यस्माद्विचित्रक्रियाकारित्वमेव कारकवैचित्र्यम्।

इदमपरं क्रियावैचित्र्यवक्रतायाः प्रकारान्तरम्—उपचारमनोज्ञता। उपचारः सादृश्यादिसमन्वयं समाश्रित्य धर्मान्तराध्यारोप[8]स्तेन मनोज्ञता वक्रत्वम्। यथा

तरन्तीवाङ्गानि स्खलदमललावण्यजलधौ
प्रथिम्नः प्रागल्भ्यं स्तनजघनमुन्मुद्रयति च।

---

(1) Omitted in A. (2) संलापसंवर्धितमानसाभिः A, contrary to metre. (3) Quoted in काव्यमीमांसा p. 70 = दशरूपकावलोक (on ii, 38) = रसार्णवसुधाकर i, 272. (4) ०दरोपचित A. (5) प्रसाधनविधानं A. (6) प्रभागः B. See above p. 35. (7) ०क्रत्वमुल्ला० lost in A. (8) समाश्रित्य धर्मा० lost in A.

दृशोर्लीलारम्भाः स्फुटमपवदन्ते सरलता-
महो साऱङ्गाक्ष्यास्तरुणिमनि गाढः परिचयः[1] ॥९१॥

अत्र स्खलदमललावण्यजलधौ समुल्लसद्विमलसौन्दर्यसम्भारसिन्धौ परिस्फुरन्त्यपि स्पन्दतया[2] प्लवमानत्वेन[3] लक्ष्यमाणानि पारप्राप्तिमासादयितुं व्यवस्यन्तीवेति[4] चेतनपदार्थसम्भविसादृश्योपचारात्तारुण्यतरलतरुणीगात्राणां तरणमुत्प्रेक्षितम्। उत्प्रेक्षायाश्चोपचार एव भूयसा जीवितत्वेन[5] परिस्फुरतीत्युत्प्रेक्षावसर एव विचारयिष्यते[6]। प्रथिम्नः प्रागल्भ्यं[7] स्तनजघनमुन्मुद्रयति च [इति]—अत्र स्तनजघनं कर्तृ प्रथिम्नः प्रागल्भ्यं महत्त्वस्य प्रौढिमुन्मुद्रयत्युन्मीलयति[8]। यथा कश्चिच्चेतनः[9] किमपि रक्षणीयं वस्तु मुद्रयित्वा कमपि समयमवस्थाप्य समुचितोपयोगावसरे स्वयमुन्मुद्रयत्युद्घाटयति[10], तदेवं तत्कारित्वसाम्यात् स्तनजघनस्योन्मुद्रणमुपचरितम्। तदिदमुक्तं भवति—यत्[11] यदेव शैशवदशायां शक्त्यात्मना निमीलितस्वरूपमनवस्थितमासीत्, तस्य प्रथिम्नः[12] प्रागल्भ्यस्य प्रथमतरतारुण्यावतारावसरसमुचितं प्रथनप्रसरं[13] समर्पयति। दृशोर्लीलारम्भाः स्फुटमपवदन्ते सरलताम् [इति]—अत्र शैशवप्रतिष्ठितां स्पष्टतां प्रकटमेवापसार्य दृशो-

---

(1) सदुक्तिकर्णामृत ii 11, p. 126 (राजशेखरस्य). But सूक्तिमुक्तावली attributes it to कुम्भक. Quoted anonymously by Hemacandra (p. 302) and वाग्भट (अलङ्कारतिलक) p. 62. माणिक्यचन्द्र refers (p. 25) to this criticism of the verse to the वक्रोक्तिजीवितकार (वक्रोक्तिजीवितकारोऽपि 'तरन्तीवाङ्गानि' इत्यत्र सादृश्योपचारमूचे।) (2) ०स्फुरन्त्यपरिस्पन्दतया A. (3) न of प्लवमान is lost in A, which reads ०त्वव for ०त्वेन. (4) व्यवस्यन्ति चेति A. (5) पचारणवयः सञ्जीवित० A. (6) वक्ष्यते A. This is discussed in ch. iii. (7) A omits all the words from here up to प्रथिम्नः प्रागल्भ्यं in the next line. (8) चामीलयति A. (9) कश्चिन्नवं A. (10) उत्पाटयति A. (11) Omitted in A. (12) प्रथिम B. (13) प्रथम० B.

विलासोल्लासाः कमपि नवयौवनसमुचितं विभ्रममधिरोपयन्ति। यथा कैश्चिच्चेतनाः कुत्रचिद्विषये कमपि व्यवहारं समासादितप्रसरमपसार्य किमपि स्वाभिप्रायाभिमतं परिस्पन्दान्तरं प्रतिष्ठापयन्तीति[1] तत्कारित्वसादृश्याल्लीलावतीलोचनविलासोल्लासानां सरलत्वापवदनमुपचरितम्। तदेवंविधेनोप[2]चारेणैतास्तिस्रोऽपि क्रियाः कामपि वक्रतामधिरोपिताः। वाक्येऽस्मिन्नपरेऽपि वक्रताप्रकाराः प्रतिपदं सम्भवन्तीत्यवसरान्तरे[3] विचार्यन्ते।

इदमपरं क्रियावैचित्र्यवक्रतायाः प्रकारान्तरम्—कर्मादिसंवृतिः। कर्मप्रभृतीनां कारकाणां संवृतिः संवरणम्, प्रस्तुतौचित्यानुसारेण सातिशयप्रतीतये समाच्छाद्याभिधा[4]। सा च क्रियावैचित्र्यकारित्वात् प्रकारत्वेनाभिधीयते[5]।

कारणे कार्योपचाराद् यथा

नेत्रान्तरे मधुरमर्पयतीव किञ्चित्
कर्णान्तिके[6] कथयतीव किमप्यपूर्वम्।
अन्तः समुल्लिखति किञ्चिदिवायताक्ष्या[7]
रागालसे मनसि रम्यपदार्थलक्ष्मीः॥ ८२॥

अत्र तदनुभवैकगोचरत्वादनाख्येयत्वेन किमपि सातिशयं प्रतिपदं कर्म सम्पादयन्त्यः क्रियाः स्वात्मनि कमपि वक्रभावमुद्भावयन्ति[8]। उपचारमनोज्ञताप्यत्र विद्यते। यस्मादर्पणकथनोल्लेखनान्युपचारनिबन्धनान्येव, चेतनपदार्थधर्मत्वात्। यथा च

---

(1) इति omitted in B. (2) ०म्। तदेवंवि० lost in A. (3) ०न्तीत्येवमनरान्तरा A. This is discussed below, p. 132. (4) B reads समाच्छाद्याभिद्य (?) (5) The whole of the paragraph is dropped in A. (6) कर्णान्तरे A. (7) ०दिवायतिताक्ष्या B. (8) ०मुत्पादयन्ति A.

नृत्तारम्भाद्विरतरभसस्तिष्ठ तावन्मुहूर्तं
यावन्मौलौ श्लथमचलतां भूषणं ते नयामि।
इत्याख्याय प्रणयमधुरं कान्तया योज्यमाने
चूडाचन्द्रे जयति सुखिनः कोऽपि शर्वस्य गर्वः ॥८३॥

अत्र 'कोऽपि' इत्यनेन सर्वनामपदेन[1] तदनुभवैकगोचरत्वादव्यपदेश्यत्वेन सातिशयः शर्वस्य गर्व इति कर्तृसंवृतिः। जयति सर्वोत्कर्षेण वर्तत इति क्रियावैचित्र्यनिबन्धनम्।

इत्ययं पदपूर्वार्धवक्रभावो व्यवस्थितः।
दिङ्मात्रमेवमेतस्य[2] शिष्टं लक्ष्ये निरूप्यते ॥८४॥

इति संग्रहश्लोकः।

तदेवं सुप्तिङन्तयोर्द्वयोरपि पदपूर्वार्धस्य[3] प्रातिपदिकस्य धातोश्च यथायुक्ति वक्रतां[4] विचार्येदानीं तयोरेव यथास्वमपरार्धस्य प्रत्यय[5]-लक्षणस्य वक्रतां विचारयति। तत्र क्रियावैचित्र्यवक्रतायाः समनन्तरसम्भविनः क्रमसमन्वितत्वात्[6] कालस्य वक्रत्वं पर्यालोच्यते, क्रियापरिच्छेदकत्वात्तस्य।

**औचित्यान्तरतम्येन[7] समयो रमणीयताम्।**
**याति यत्र भवत्येषा कालवैचित्र्यवक्रता ॥२६॥**

एषा प्रक्रान्तस्वरूपा भवत्यस्ति कालवचित्र्यवक्रता[8]। कालो वैयाकरणादिप्रसिद्धो वर्तमानादिर्लट्प्रभृतिप्रत्ययवाच्यो यः पदार्थानामुदयतिरोधानविधायी[9], तस्य वैचित्र्यं विचित्रभावस्तथाविधत्वेनो-

---

(1) Omitted in A. (2) दिङ्मात्रमेव तदेतस्य A; दिङ्मात्रमेतदस्य B (both readings corrupt, because contrary to metre). (3) पद॰ omitted in A. (4) वक्रभावं A. (5) ॰स्य प्रत्यय॰ lost in A. (6) क्रिया for क्रम in B. (7) औचित्यान्त॰ lost in A. (8) All words from एषा up to this omitted in A. (9) ॰नामुदय॰ lost in A.

पनिबन्धस्तेन वक्रता वक्रत्वविच्छित्तिः। कोदृशो—यत्र यस्यां समयः कालाख्यो रमणीयतां याति रामणीयकं गच्छति। केन हेतुना—औचित्यान्तरतम्येन। प्रस्तुतत्वात्प्रस्तावाधिकृतस्य वस्तुनो यदौचित्यमुचितभावस्तस्यान्तरतम्येनान्तरङ्गत्वेन। तदतिशयोत्पादकत्वेनेत्यर्थः। यथा

समविसमणिव्विसेसा समंतदो मंदमंदसंचारा।
अइरा होहिंति पहा मणोरहाणं पि दुल्लंघा[1] ॥९५॥

अत्र वल्लभाविरहवैधुर्यकातरान्तःकरणेन[2] भाविनः समयस्य सम्भावनानुमानमाहात्म्यमुत्प्रेक्ष्य उद्दीपनविभावत्वविभवविलसितं तत्परिस्पन्दसौन्दर्यसन्दर्शनासहिष्णुना किमपि भयविसंष्ठुलत्वमनुभूय शङ्काकुलत्वेन केनचिदेतदभिधीयते—यदचिराद् भविष्यन्ति पन्थानो मनोरथानामप्यलङ्घनीया इति भविष्यत्कालाभिधायी प्रत्ययः कामप्यपरार्धवक्रतां[3] विकासयति। यथा वा

यावत्किञ्चिदपूर्वमार्द्रमनसामावेदयन्तो नवाः
सौभाग्यातिशयस्य कामपि दशां गन्तुं व्यवस्यन्त्यमी।
भावास्तावदनन्यजस्य[4] विधुरः कोऽप्युद्यमो[5] जृम्भते
पर्याप्ते मधुविभ्रमे तु किमयं कर्तेति कम्पामहे ॥९६॥

अत्र व्यवस्यन्ति जृम्भते कर्ता कम्पामहे चेति प्रत्ययाः प्रत्येकं प्रतिनियतकालाभिधायिनः कामपि पदपरार्धवक्रतां प्रख्यापयन्ति। तथा च—प्रथमतरावतीर्णमधुसमयसौकुमार्यसमुल्लसितसुन्दरपदार्थसार्थसमुन्मेषसमुद्दीपितसहजविभवविलसितत्वेन मकरकेतोर्मनाङ्मात्रमाधव-

(1) गाथासप्तशतक 675 = quoted in ध्वन्यालोक p.158. The छाया would be
समविषमनिर्विशेषाः समन्ततो मन्दमन्दसञ्चाराः।
अचिराद्भविष्यन्ति पन्थानो मनोरथानामपि दुर्लङ्घ्याः ॥

(2) ०कातरा० omitted in A. (3) कामपि पदार्थ० B. (4) भाव: A. (5) कोऽप्युद्य मे A.

सानाथ्य[1]समुल्लसितातुलशक्तेः सरसहृदयविधुरताविधायी कोऽपि संरम्भः समुज्जृम्भते। तस्मादनेनानुमानेन परं परिपोषमधिरोहति। कुसुमाकरविभवविभ्रमे मानिनीमानदलनदुर्ललितसमुदितसहजसौकुमार्यसम्पत्संजनितसमुचितजिगीषावसरः[2] किमसौ विधास्यतीति विकल्पयन्तस्तत्कुसुमशरनिकरनिपातकातरान्तःकरणाः किमपि कम्पामहे चकितचेतसः सम्पद्यामह इति प्रियतमाविरहविधुरचेतसः सरसहृदयस्य कस्यचिदेतदभिधानम्।

एवं कालवक्रतां विचार्य क्रमसमुचितावसरां कारकवक्रतां विचारयति—

यत्र कारकसामान्यं प्राधान्येन निबध्यते।
तत्त्वा[3]ध्यारोपणान्मुख्यगुणभावाभिधानतः ॥२७॥
परिपोषयितुं काञ्चिद् भङ्गीभणितिरम्यताम्[4]।
कारकाणां विपर्यासः सोक्ता कारकवक्रता ॥२८॥

सोक्ता कारकवक्रता सा कारकवक्रत्वविच्छित्तिरभिहिता। कीदृशी—यस्यां कारकाणां विपर्यासः साधनानां विपरिवर्तनम्, गौणमुख्ययोरितरेतरत्वापत्तिः। कथम्—यत् कारकसामान्यं मुख्यापेक्षया[5] करणादि तत् प्राधान्येन मुख्यभावेन प्रयुज्यते। कया युक्त्या[6]—तत्त्वाध्यारोपणात्। तदिति मुख्यपरामर्शः, तस्य भावस्तत्त्वं तदध्यारोपणात् मुख्यभावसमर्पणात्[7]। तदेवं मुख्यस्य का व्यवस्थेत्याह[8]—मुख्यगुणभावाभिधानतः। मुख्यस्य यो गुणभावस्तदभिधानादमुख्यत्वेनोपनिबन्धादित्यर्थः। किमर्थम्—परिपोषयितुं[9] काञ्चिद् भङ्गीभणितिरम्यताम्[10]। काञ्चिदपूर्वां विच्छित्त्युक्तिरमणीयतामुल्लासयितुम्।

(1) ॰साद्यं B. (2) ॰दुर्ललितसहजमाधुर्यसम्पत्॰ A. (3) तस्या A. (4) रस्तां B; रुच्यताम् A. (5) मुख्यगौणापेक्षया A. (6) हत्त्वा A. (7) मुख्यभावसम॰ lost in A. (8) काप्यवस्था A. (9) पोषयितुं lost in A. (10) ॰रस्ततां B.

तदेवमचेतनस्यापि चेतनसम्भवित्वात्स्वातन्त्र्यसमर्पणादमुख्यस्य[1] करणादेर्वा कर्तृत्वाध्यारोपणाद्यत्र[2] कारकविपर्यासश्चमत्कारकारी सम्पद्यते। यथा

याच्ञां दैन्यपरिग्रहप्रणयिनीं नेक्ष्वाकवः शिक्षिताः
सेवासञ्वलितः कदा रघुकुले[3] मौलौ निबद्धोऽञ्जलिः[4]।
सर्वं तद्विहितं तथाप्युदधिना नैवोपरोधः कृतः
पाणिः सम्प्रति मे हठात् किमपरं स्प्रष्टुं[5] धनुर्धावति[6] ॥ ९७ ॥

अत्र पाणिना धनुर्ग्रहीतुमिच्छामीति वक्तव्ये पाणेः करणभूतस्य कर्तृत्वाध्यारोपः कामपि कारकवक्रतां[7] प्रतिपद्यते। यथा वा

स्तनद्वन्द्वम्[8] इत्यादौ[9] ॥ ९८ ॥

यथा वा

निष्पर्यायनिवेशपेशलरसैरन्योन्यनिर्भर्त्सिभि-
र्हस्ताग्रैर्युगपन्निपत्य दशभिर्वामैर्धृतं कार्मुकम्।
सव्यानां पुनरप्रथीयसि विधावस्मिन्[10] गुणारोपणे
मत्सेवाविदुषामहम्प्रथमिका काप्यम्बरे वर्तते[11] ॥ ९९ ॥

अत्र पूर्ववदेव कर्तृत्वाध्यारोपनिबन्धनं कारकवक्रत्वम्। यथा वा

बद्धस्पर्द्ध इति[12] ॥ १०० ॥

एवं कारकवक्रतां विचार्य क्रमसमन्वितां संख्यावक्रतां विचारयति, तत्परिच्छेदकत्वात् संख्यायाः[13]—

---

(1) ०समर्पणमनुख्यस्य A, after which करणादेर्वा lost. (2) कर्तृध्यारोप० A. (3) कदा रघुकुले lost in A. (4) निबद्धाञ्जलिः B. (5) स्पष्टं A. (6) वाञ्छति B. This verse occurs in महानाटक ( मधुसूदन's version ), ed. जीवानन्द, iv, 78, p. 54. Quoted anonymously in सरस्वतीकण्ठा० p. 52. (7) कारक० omitted in B. (8) See above p. 38. (9) This illustration is omitted here in A. (10) विधावस्मिन् B. (11) बालरामायण i, 50 (p. 23). (12) See above p. 39. (13) तत्परि etc. omitted in A.

कुर्वन्ति काव्यवैचित्र्यविवक्षापरतन्त्रिताः ।
यत्र संख्याविपर्यासं तां संख्यावक्रतां विदुः ॥ २९ ॥

यत्र यस्यां कवयः काव्यवैचित्र्यविवक्षापरतन्त्रिताः स्वकर्मविचित्रभावाभिधित्सापरवशाः संख्याविपर्यासं वचनविपरिवर्तनं कुर्वन्ति विदधते तां संख्यावक्रतां विदुः, तद्वचनवक्रत्वं जानन्ति तद्विदः। तदयमत्रार्थः—यदेकवचने द्विवचने वा प्रयोक्तव्ये वैचित्र्यार्थं वचनान्तरं यत्र प्रयुज्यते, भिन्नवचनयोर्वा यत्र सामानाधिकरण्यं विधीयते। यथा

कपोले पत्रालो करतलनिरोधेन मृदिता
निपीतो निश्वासैरयममृतहृद्योऽधररसः।
मुहुः कण्ठे लग्नस्तरलयति बाष्पः स्तनतटीं
प्रियो मन्युर्जातस्तव निरनुरोधे न तु वयम्[1] ॥१०१॥

अत्र 'न त्वहम्' इति वक्तव्ये, 'न तु वयम्' इत्यन्तरङ्गत्वप्रतिपादनार्थं ताटस्थ्यप्रतीतये बहुवचनं प्रयुक्तम्। यथा वा

वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती[2] ॥१०२॥

अत्रापि पूर्ववदेव ताटस्थ्यप्रतीतिः। यथा वा

फुल्लेन्दीवरकाननानि नयने पाणी सरोजाकराः[3] ॥ १०३ ॥

अत्र द्विवचनबहुवचनयोः सामानाधिकरण्यलक्षणः संख्याविपर्यासः सहृदयहृदयहारितामावहति। यथा वा

शास्त्राणि चक्षुर्नवम्[4] इति ॥ १०४ ॥

अत्र पूर्ववदेवैकवचनबहुवचनयोः सामानाधिकरण्यं वैचित्र्यविधायि।

---

(1) अमरुशतक no. 85 = सुभाषितावली no. 1627 (anon) = कवीन्द्रवचन no. 377 (anon) = सदुक्तिकर्णा० ii, 245 (anon) = ध्वन्यालोक p. 86 (anon) = सरस्वतीकण्ठा० p. 370. (2) अभिज्ञानशकुन्तल i, 24. (3) See above p. 38. (4) बालरामायण i, 36. See above p. 90.

एवं संख्यावक्रतां[1] विचार्य तद्विषयत्वात् पुरुषाणां क्रमसमर्पितावसरां पुरुषवक्रतां विचारयति—

**प्रत्यक्ता[2] परभावश्च विपर्यासेन योज्यते ।**
**यत्र विच्छित्तये सैषा ज्ञेया पुरुषवक्रता ॥३०॥**

यत्र यस्यां प्रत्यक्ता निजात्मभावः परभावश्च अन्यत्वमुभयमप्येतद्विपर्यासेन योज्यते विपरिवर्तनेन निबध्यते। किमर्थम्[3]—विच्छित्तये वैचित्र्याय। सैषा वर्णितस्वरूपा ज्ञेया ज्ञातव्या पुरुषवक्रता पुरुषवक्रत्वविच्छित्तिः। तदयमत्रार्थः—यदन्यस्मिन्नुत्तमे मध्यमे वा पुरुषे[4] प्रयोक्तव्ये वैचित्र्यायान्यः कदाचित् प्रथमः प्रयुज्यते। तस्माच्च पुरुषैकयोगक्षेमत्वादस्मदादेः प्रातिपदिकमात्रस्य च विपर्यासः पर्यवस्यति[5]।
यथा

कौशाम्बीं परिभूय नः कृपणकैर्विद्वेषिभिः स्वीकृतां
जानास्येव[6] तथा प्रमादपरतां पत्युर्नयद्वेषिणः।
स्त्रीणां च प्रियविप्रयोगविधुरं चेतः सदैवात्र मे
वक्तुं नोत्सहते[7] मनः परमतो जानातु देवी स्वयम्[8] ॥१०५॥

अत्र 'जानातु देवी स्वयम्' इति युष्मदि मध्यमपुरुषे प्रयोक्तव्ये प्रातिपदिकमात्रप्रयोगेण वक्तुस्तदशक्यानुष्ठानतां मन्यमानस्यौदासीन्यप्रतीतिः। तस्याश्च[9] प्रभुत्वात् स्वातन्त्र्येण हिताहितविचारपूर्वकं स्वयमेव कर्तव्यार्थप्रतिपत्तिः[10] कमपि वाक्यवक्रभावमावहति। यस्मादेतदेवास्य वाक्यस्य जीवितत्वेन परिस्फुरति।

---

(1) ०वैचित्र्यं for वक्रता A. (2) प्रत्युक्ता A and B. In the वृत्ति, the word is the same in B, but प्रयक्ती in A. (3) ०ध्यते। किम० lost in A. (4) ०ध्यमे वा पु० lost in A. (5) ०सः पर्यवस्यति lost in A. (6) जानासेव B; जानात्यस्य A. (7) नोपहृते A. (8) तापसवत्सराज० ( Berlin Ms i, 67 a ). (9) चैव for च in A. (10) ०प्रतीतिः A.

एवं पुरुषवक्रतां विचार्य पुरुषाश्रयत्वादात्मनेपदपरस्मैपदयोरुचितावसरां वक्रतां विचारयति। धातूनां लक्षणानुसारेण नियतपदाश्रयः प्रयोगः पूर्वाचार्याणाम् 'उपग्रह'-शब्दाभिधेयतया प्रसिद्धः, तस्मात्तदभिधानेनैव व्यवहरति—

पदयोरुभयोरेकमौचित्याद्[1] विनियुज्यते।
शोभायै यत्र जल्पन्ति तामुपग्रहवक्रताम् ॥ ३१ ॥

तामुक्तस्वरूपामुपग्रहवक्रतामुपग्रहवक्रत्वविच्छित्तिं जल्पन्ति कवयः कथयन्ति। कीदृशी—यत्र यस्यां पदयोरुभयोर्मध्यादेकमात्मनेपदं परस्मैपदं वा विनियुज्यते विनिबध्यते नियमेन। कस्मात् कारणात्—औचित्यात्। वर्ण्यमानस्य वस्तुनो यदौचित्यमुचितभावस्तस्मात्, तं समाश्रित्येत्यर्थः। किमर्थम्—शोभायै, विच्छित्तये। यथा

तस्यापरेष्वपि मृगेषु शरान्मुमुक्षोः
कर्णान्तमेत्य बिभिदे निविडोऽपि मुष्टिः।
त्रासातिमात्रचटुलैः स्मरयत्सु नेत्रैः
प्रौढप्रियानयनविभ्रमचेष्टितानि[2] ॥ १०६ ॥

अत्र राज्ञः सुललितविलासवतीलोचनविलासेषु स्मरणगोचरमवतरत्सु तत्परायत्तचित्तवृत्तेराङ्गिकप्रयत्नपरिस्पन्दविनिवर्तमाना मुष्टिर्बिभिदे[3] भिद्यते स्म। स्वयमेवेति कर्मकर्तृनिबन्धन[4]मात्मनेपदमतीव चमत्कारकारिणीं[5] कामपि वाक्यवक्रतामावहति।

एवमुपग्रहवक्रतां विचार्य तदनुसम्भविनीं प्रत्ययान्तरवक्रतां विचारयति—

---

(1) पदयोरेकमौचित्यादुभयोर् A. (2) रघु० ix, 58. (3) निवर्तनान्मुष्टिः A. (4) कर्मकर्तृकत्व० A. (5) ०कारकारि A.

विहितः प्रत्ययादन्यः प्रत्ययः कमनीयताम् ।
यत्र कामपि पुष्णाति सान्या प्रत्ययवक्रता ॥ ३२ ॥

सान्या प्रत्ययवक्रता[1] सा सामाम्नातरूपादन्यापरा[2] काचित् प्रत्ययवक्रत्वविच्छित्तिः । अस्तीति सम्बन्धः । यत्र यस्यां प्रत्ययः काममप्यपूर्वां कमनीयतां[3] रम्यतां पुष्णाति पुष्यति । कीदृशः—प्रत्ययात् तिङादेर्विहितः पदत्वेन विनिर्मितोऽन्यः[4] कश्चिदिति । यथा

लीनं वस्तुनि येन सूक्ष्मसुभगं तत्त्वं गिरा[5] कृष्यते
निर्मातुं प्रभवेन्मनोहरमिदं वाचैव यो वा बहिः[6] ।
वन्दे द्वावपि तावहं कविवरौ वन्देतरां तं पुन-
र्यो विज्ञातपरिश्रमोऽयमनयोर्भारावतारक्षमः ॥ १०७ ॥

'वन्देतराम्' इत्यत्र[7] कापि प्रत्ययवक्रता कवेश्चेतसि परिस्फुरति । ततएव 'पुनः'-शब्दः पूर्वस्माद्विशेषाभिधायित्वेन[8] प्रयुक्तः ।

एवं नामाख्यातस्वरूपयोः पदयोः प्रत्येकं प्रकृत्याद्यवयवविभागद्वारेण[9] यथासम्भवं वक्रत्वं[10] विचार्येदानीमुपसर्गनिपातयोरव्युत्पन्नत्वादसम्भवद्विभक्तिकत्वाच्च[11] निरस्तावयवत्वे सत्यविभक्तयोः[12] साकल्येन वक्रतां विचारयति—

रसादिद्योतनं यस्यामुपसर्गनिपातयोः ।
वाक्यैकजीवितत्वेन सापरा पदवक्रता ॥ ३३ ॥

सापरा पदवक्रता—सा समर्पितस्वरूपापरा पूर्वोक्तव्यतिरिक्ता

---

(1) This phrase is lost in A, but marked by no lacuna. (2) अपरा omitted in A. (3) कमनी॰ lost in A. (4) दरतोऽन्यः A. (5) गिरां A. (6) वाक्पतिः for वा बहिः in A. (7) वन्देतरामित्य॰ lost in A. (8) विशेषाभिधायी A. (9) प्रकृत्या lost in A, which also omits विभाग. (10) वक्रभावं B. (11) निपातयोरपि उत्पन्नत्वादसम्भवादविहतभक्तिकत्वात्र A. (12) सत्य lost in A.

पदवक्रत्वविच्छित्तिः। अस्तीति सम्बन्धः। कीदृशी—यस्यां वक्रतायामुपसर्गनिपातयोर्वैयाकरणप्रसिद्धाभिधानयो रसादिद्योतनं शृङ्गारप्रभृतिप्रकाशनम्। कथम्—वाक्यैकजीवितत्वेन। वाक्यस्य श्लोकादेरेकजीवितं वाक्यैकजीवितं तस्य भावस्तत्त्वं तेन। तदिदमुक्तं भवति—यद्वाक्यस्यैकस्फुरितभावेन परिस्फुरति यो रसादिस्तत्प्रकाशनेनेत्यर्थः। यथा

वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव[1] ॥ १०८॥

अत्र रघुपतिस्तत्कालज्वलितोद्दीपनविभावसम्पत्समुल्लासितः सम्भ्रमो निश्चितजनितजानकीविपत्तिसम्भावनस्तत्परित्राणकरणोत्साहकारणतां प्रतिपद्यमानस्तदेकाग्रतोल्लिखितसाक्षात्कारस्तदाकारतया[2] विस्मृतविप्रकर्षः प्रत्यग्ररसपरिस्पन्दसुन्दरो निपातपरम्पराप्रतिपद्यमानवृत्तिर्वाक्यैकजीवितत्वेन प्रतिभासमानः कामपि[3] वाक्यवक्रतां[3] समुन्मीलयति। 'तु'-शब्दस्य च वक्रभावः पूर्वमेव व्याख्यातः। यथा वा

अयमेकपदे तया वियोगः
प्रियया चोपनतः सुदुःसहो मे।
नववारिधरोदयादहोभि-
र्भवितव्यं च निरातपत्वरम्यैः[4] ॥ १०९ ॥

अत्र द्वयोः परस्परं सुदुःसहत्वोद्दीपनसामर्थ्यसमेतयोः[5] प्रियाविरहवर्षाकालयोस्तुल्यकालत्वप्रतिपादनपरं 'च'-शब्दद्वितयं समसमयसमुल्लसितवह्निदाहदक्षदक्षिणवातव्यजनसमानतां[6] समर्थयत् कामपि वाक्यवक्रतां समुद्दीपयति[7]। 'सु'-'दुः'-शब्दाभ्यां च प्रियाविरहस्याशक्यप्रतीकारता प्रतीयते। यथा च

(1) See above p. 89. (2) साक्षात्कारतदाकार० B. (3) Omitted in A. (4) निरातपत्व B. विक्रमोर्वशी iv, 3 = ध्वन्यालोक p. 156 = काव्यप्रकाश p. 690. (5) ०सामर्थ्यसितयोः A. (6) B omits दक्ष and reads व्यसन for व्यजन. (7) समुन्मीलयति A.

मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लवाभिरामम् ।
मुखमंसविवर्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं न चुम्बितं तु[1] ॥ ११० ॥

अत्र नायकस्य प्रथमाभिलाषविवशवृत्तेरनुभवस्मृतिसमुल्लिखिततत्कालसमुचिततद्वदनेन्दुसौन्दर्यस्य पूर्वंपरिचुम्बनस्खलितसमुद्दीपितपश्चात्तापवशाविशद्योतनपरः[2] 'तु'-शब्दः कामपि वाक्यवक्रतामुत्तेजयति ।

एतदुत्तरत्र प्रत्ययवक्रत्वमेवंविधप्रत्ययान्तरवक्रभावान्तर्भूतत्वात् पृथक्त्वेन नोक्तमिति[3] स्वयमेवोत्प्रेक्षणीयम् । यथा[4]

येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते ।
बर्हेणेव स्फुरितरुचिना गोपवेषस्य विष्णोः[5] ॥ १११ ॥

अत्र 'अतितराम्' इत्यतीव चमत्कारकारि । एवमन्येषामपि सजातीयलक्षणद्वारेण लक्षणनिष्पत्तिः स्वयमनुसर्तव्या । तदेवमियमनेकाकारा वक्रत्वविच्छित्तिश्चतुर्विधपदविषया वाक्यैकदेशजीवितत्वेनापि[6] परिस्फुरन्ती सकलवाक्यवैचित्र्यनिबन्धनतामुपयाति ।

वक्रतायाः प्रकाराणामेकोऽपि कविकर्मणः ।
तद्विदाह्लादकारित्वहेतुतां प्रतिपद्यते ॥ ११२ ॥

इत्यन्तरश्लोकः[7] ।

यद्येवमेकस्यापि[8] वक्रताप्रकारस्य यदेवंविधो महिमा तदेते बहवः सम्पतिताः[9] सन्तः किं सम्पादयन्तीत्याह—

**परस्परस्य शोभायै बहवः पतिताः क्वचित् ।**
**प्रकारा जनयन्त्येतां[10] चित्रच्छायामनोहराम् ॥३४॥**

(1) अभिज्ञानशकुन्तल iii, 78 = ध्वन्यालोक p. 156. (2) ०पश्चात्तापदेशा० B, which also reads पूर्वमपरिचुम्बन०. (3) ०न नो० lost in A. (4) Omitted in A. (5) मेघदूत 15. (6) जीवितत्वेना० lost in A. (7) Omitted in A. (8) एकस्या० lost in A. (9) सम्पादिता, A. (10) ०यन्त्ये० lost in A.

क्वचिदेकस्मिन् पदमात्रे वाक्ये वा वक्रताप्रकारा वक्रत्वप्रभेदा बहवः प्रभूताः कविप्रतिभामाहात्म्यसमुल्लसिताः। किमर्थम्—परस्परस्य शोभायै, अन्योन्यस्य विच्छित्तये। एतामेव चित्रच्छायामनोहरामनेकाकारकान्तिरमणीयां वक्रतां जनयन्त्युत्पादयन्ति। यथा[1]

तरन्तीव इति ॥ ११३ ॥

अत्र क्रियापदानां त्रयाणामपि प्रत्येकं त्रिप्रकारं वैचित्र्यं परिस्फुरति—क्रियावैचित्र्यं कारकवैचित्र्यं कालवैचित्र्यं च। प्रथिम-स्तन-जघन-तरुणिम्नां त्रयाणामपि वृत्तिवैचित्र्यम्। लावण्य-जलधि-प्रागल्भ्य-सरलता-परिचय-शब्दानामुपचारवैचित्र्यम्। तदेवमेते बहवो वक्रताप्रकारा एकस्मिन् पदे वाक्ये वा सम्पतिताश्चित्रच्छायामनोहरामेतामेव चेतनचमत्कारकारिणीं वाक्यवक्रतामावहन्ति।

एवं नामाख्यातोपसर्गनिपातलक्षणस्य चतुर्विधस्यापि पदस्य यथासम्भवं वक्रताप्रकारान् विचार्येदानीं प्रकरणमुपसंहृत्यान्यदवतारयति—

**वाग्वल्ल्याः पदपल्लवास्पदतया या वक्रतोद्भासिनी**
**विच्छित्तिः सरसत्वसम्पदुचिता काप्युज्ज्वला जृम्भते[2]।**
**तामालोच्य[3] विदग्धषट्पदगणैर्वाक्यप्रसूनाश्रयं[4]**
**स्फारामोदमनोहरं मधु नवोत्कण्ठाकुलं पीयताम् ॥३५**

वागेव वल्ली वाणीलता तस्याः काप्यलौकिकी विच्छित्तिर्जृम्भते शोभा समुल्लसति। कथम्—पदपल्लवास्पदतया। पदान्येव पल्लवानि[5] सुप्तिङन्तान्येव पत्त्राणि तदास्पदतया तदाश्रयत्वेन। कीदृशी

(1) omitted in A. For this quotation, see above p. 119. (2) B reads वाग्वल्ल्याः सरसत्वसम्पदुचिता in the first and विच्छित्तिः पदपल्लवास्पदतया in the second line. (3) तामासाद्य A. (4) ०नाश्रयि A and B. (5) पल्लवाः A.

विच्छित्तिः—सरसत्वसम्पदुचिता, रसवत्त्वातिशयोपपन्ना[1]। किंविशिष्टा च—वक्रतया वक्रभाविनोद्भासते भ्राजते या सा तथोक्ता। कीदृशी—उज्ज्वला, छायातिशयरमणीया। तामेवंविधामालोच्य विचार्य विदग्धषट्पदगणैर्विबुधषट्चरणचक्रैर्मधु पीयतां मकरन्द आस्वाद्यताम्। कीदृशम्—वाक्यप्रसूनाश्रयम्। वाक्यान्येव पदसमुदायरूपाणि प्रसूनानि पुष्पाण्याश्रयः स्थानं यस्य तत्तथोक्तम्। अन्यच्च कीदृशम्—स्फारामोदमनोहरम्। स्फारः स्फीतो योऽसावामोदस्तद्धर्मविशेषस्तेन[2] मनोहरं हृदयहारि। कथमास्वाद्यताम्—नवोत्कण्ठाकुलं नूतनोत्कलिकाव्यग्रम्। मधुकरसमूहाः खलु वल्लराः प्रथमोल्लसितपल्लवोल्लेखमालोच्य प्रतीतचेतसः समनन्तरोद्भिन्नसुकुमारकुसुममकरन्दपानमहोत्सवमनुभवन्ति[3]। तद्वदेव सहृदयाः पदास्पदां कामपि वक्रताविच्छित्तिमालोच्य नवोत्कलिकाकलितचेतसो वाक्याश्रयं किमपि वक्रताजीवितसर्वस्वं विचारयन्त्वीति तात्पर्यार्थः। अत्रैकत्र सरसत्वं स्वसमयसम्भवि रसाढ्यत्वम्, अन्यत्र[4] शृङ्गारादिव्यञ्जकत्वम्। वक्रतैकत्र बालेन्दुसुन्दरसंस्थानयुक्तत्वम्, इतरत्रोक्त्यादिवैचित्र्यम्। विच्छित्तिरेकत्र सुविभक्तपत्रत्वम्, अन्यत्र कविकौशलकमनीयता[5]। उज्ज्वलत्वमेकत्र पर्णच्छायायुक्तत्वम्, अपरत्र[6] सन्निवेशसौन्दर्यसमुदयः। आमोदः पुष्पेषु सौरभम्, वाक्येषु तद्विदाह्लादकारिता५। मधु कुसुमेषु मकरन्दः[7], वाक्येषु सकलकाव्यकारणसम्पत्समुदय इति।

इति श्रीमत्[8] कुन्तकविरचिते[9]
वक्रोक्तिजीविते द्वितीय उन्मेषः॥

---

(1) सरसत्वातिशयो॰ A. (2) तद्धर्म omitted in A. (3) B adds वस्तु before सुकुमार. (4) ॰सम्भविरसा॰ lost in A, which reads after the lacuna ॰ढ्यत्वम् (probably रसाढ्यत्वम्.) (5) ॰कौशलक॰ lost in A. (6) वर्ण for पर्ण in B. (7) ॰सुमेषु मक॰ lost in A. (8) Omitted in B. (9) ॰कुन्तलकविवि॰ A.

# तृतीयोन्मेषः ।

एवं पूर्वस्मिन् प्रकरणे वाक्यावयवानां पदानां यथासम्भवं वक्रभावं विचारयन्[1] वाचकवक्रताविच्छित्तिप्रकाराणां[2] दिक्प्रदर्शनं विहितवान् । इदानीं वाक्यवक्रतावैचित्र्यमासूत्रयितुं वाच्यस्य वर्णनीयतया प्रस्तावाधिकृतस्य वस्तुनो वक्रतास्वरूपं निरूपयति, पदार्थावबोधपूर्वकत्वाद्[3] वाक्यार्थावसितेः,—

**उदारस्वपरिस्पन्दसुन्दरत्वेन वर्णनम् ।**
**वस्तुनो वक्रशब्दैकगोचरत्वेन वक्रता[4] ॥ १ ॥**

वस्तुनो वर्णनीयतया प्रस्तावितस्य[5] पदार्थस्य यदेवंविधत्वेन वर्णनं सा तस्य वक्रता वक्रत्वविच्छित्तिः । किंविधत्वेनेत्याह—उदारस्वपरिस्पन्दसुन्दरत्वेन[6] । उदारः सोत्कर्षः सर्वातिशायी यः स्वपरिस्पन्दः स्वभावमहिमा तस्य सुन्दरत्वं सौकुमार्यातिशयस्तेन, अत्यन्तरमणीयस्वाभाविकधर्मयुक्तत्वेन । वर्णनं प्रतिपादनम् । कथम्—वक्रशब्दैकगोचरत्वेन । वक्रो योऽसौ नानाविधवक्रताविशिष्टः शब्दः कश्चिदेव वाचकविशेषो विवक्षितार्थसमर्पणसमर्थस्तस्यैकस्य केवलस्य[7] गोचरत्वेन प्रतिपाद्यतया विषयत्वेन[8] । वाच्यत्वेनेति नोक्तम्, व्यङ्ग्यत्वेनापि प्रतिपादनसम्भवात् । तदिदमुक्तं भवति—यदेवंविधे भावस्वभावसौकुमार्यवर्णनप्रस्तावे[9] भूयसां[10] न वाच्यालङ्काराणामुपमादीनामुपयोगयोग्यता सम्भवति, स्वभावसौकुमार्यातिशयम्लानताप्रसङ्गात् ।

---

(1) Omitted in A. (2) A reads वाच्यवाचकवक्रता०. (3) ०बोधकत्वाद B. (4) The कारिका is missing in A ; but this is marked by the words उदारेत्यादि instead, at the beginning of the वृत्ति. (5) प्रस्तौचितस्य A. (6) स्व dropped in A. (7) Omitted in B. (8) विशेषणत्वेन A. (9) ०सौकुमार्यवर्णमानप्रस्तावि A. (10) बहुयमा (?) A.

ननु च सैषा सहृदयाह्लादकारिणी स्वभावोक्तिरलङ्कारतया समाम्नाता, तस्मात् किं तद्दूषणदुर्व्यसनप्रयासेन? यतस्तेषां सामान्यवस्तुधर्ममात्रमलङ्कार्यम्[1], सातिशयस्वभावसौन्दर्यपरिपोषणमलङ्कारः प्रतिभासते। तेन स्वभावोक्तेरलङ्कारत्वमेव[2] युक्तियुक्तमिति ये मन्यन्ते तान् प्रति[3] समाधीयते—यदेतन्नातिचतुरस्रम्। यस्माद् गतिकगतिन्यायेन काव्यकरणं न[4] यथाकथञ्चिदनुष्ठेयतामर्हति, तद्विदाह्लादकारिकाव्यलक्षणप्रस्तावात्[5]। किञ्च[6]—अनुत्कृष्टधर्मयुक्तस्य वर्णनीयस्यालङ्करणमप्यसमुचितभित्तिभागोल्लिखितालेख्यवन्न[7] शोभातिशयकारितामावहति। यस्मादत्यन्तरमणीयस्वाभाविकधर्मयुक्तं वर्णनीयवस्तु परिग्रहणीयम्। तथाविधस्य तस्य यथायोगमौचित्यानुसारेण रूपकाद्यलङ्कार[8]योजनया भवितव्यम्। एतावांस्तु[9] विशेषो यत् स्वाभाविकसौन्दर्यप्राधान्येन विवक्षितस्य न[10] भूयसा रूपकाद्यलङ्कार उपकाराय कल्पते, वस्तुस्वभावसौकुमार्यस्य[11] रसादिपरिपोषणस्य वा समाच्छादनप्रसङ्गात्। तथा चैतस्मिन्[12] विषये सर्वाकारमलङ्कार्यं विलासवतीव पुनरपि स्नानसमय[13]-विरहव्रतपरिग्रह[14]-सुरतावसानादौ नात्यन्तमलङ्करणसहतां प्रतिपद्यते, स्वाभाविकसौकुमार्यस्यैव रसिकहृदयाह्लादकारित्वात्[15]। यथा

तां प्राङ्मुखीं तत्र निवेश्य तन्वीं
क्षणं व्यलम्बन्त[16] पुरो निषण्णाः।

---

(1) सामान्येन सुधर्ममवमलङ्कार्यं A. (2) ०वोक्तेरनलङ्कार० B. (3) नानु प्रीति A. (4) A repeats काव्यकरणं न. (5) ०प्रस्तावा A. (6) A adds a न before किञ्च. (7) ०वर्ण for ०वन्न A. (8) आदि omitted in B. (9) एतावता स A. (10) Omitted in A. (11) व of वस्तु lost in A. (12) च कस्मिंश्चिद् B. (13) A is corrupt here and reads पुरिस्तातत. (14) ०व्रतपरि० lost in A. (15) रहित for रसिक in A. (16) Lost in A.

भूतार्थशोभाक्रियमाणनेत्राः
प्रसाधने सन्निहितेऽपि नार्यः[1] ॥ १ ॥

अत्र तथाविधस्वाभाविकसौकुमार्यमनोहरः शोभातिशयः कवेः प्रतिपादयितुमभिप्रेतः[2] । अस्यालङ्करणकलापकलनं[3] सहजच्छायातिरोधानशङ्कास्पदत्वेन सम्भावितम् । यस्मात्[4] स्वाभाविकसौकुमार्यप्राधान्येन वर्ण्यमानस्योदारस्वपरिस्पन्दमहिम्नः[5] सहजच्छायातिरोधानविधायि[6] प्रतीत्यन्तरापेक्षमलङ्करणकल्पनं नोपकारितां प्रतिपद्यते । विशेषस्तु—रसपरिपोषपेशलायाः प्रतीतेर्विभावानुभावव्यभिचार्यौचित्यव्यतिरेकेण प्रकारान्तरेण[7] प्रतिपत्तिः प्रस्तुतशोभापरिहारकारितामावहति । तथा च प्रथमतर[8]तरुणीतारुण्यावतारप्रभृतयः पदार्थाः सुकुमारवसन्तादिसमयसमुन्मेषपरिपोषपरिसमाप्तिप्रभृतयश्च स्वप्रतिपादकवाक्यवक्रताव्यतिरेकेण[9] भूयसा न कस्यचिदलङ्करणान्तरस्य कविभिरलङ्करणीयतामुपनीयमानाः[10] परिदृश्यन्ते । यथा

स्मितं किञ्चिन्मुग्धं तरलमधुरो दृष्टिविभवः
परिस्पन्दो वाचामभिनवविलासोक्तिसरसः ।
गतानामारम्भः किसलयितलीलापरिमलः
स्पृशन्त्यास्तारुण्यं किमिव हि न रम्यं मृगदृशः[11] ॥ २ ॥

यथा वा

अव्युत्पन्नमनोभवा मधुरिमस्पर्शोल्लसन्मानसा[12]
भिन्नान्तःकरणं दृशौ मुकुलयन्त्याघ्रातभूतोद्गमाः[13] ।

(1) कुमार० vii, 13. (2) ०वेः प्रतिपा० lost in A. (3) यस्य for अस्य in B. (4) तस्य ते B. (5) वर्ण्यमानपदार्थपरिस्पन्द० A. (6) विरोधिन for तिरोधान in A. (7) प्रकारान्तर B. (8) प्रथम B. (9) B drops स्व, and A adds पद before वाक्य. (10) B omits कविभिः. (11) Quoted in ध्वन्यालोक p. 234 (anon). (12) ०मानसो A : B drops ०रिम०. (13) दृशोर्मुकुलय० A and ०भूतोद्गमाः B.

रागीच्छां न[1] समापयन्ति मनसः खेदं विनैवालसा[2]
वृत्तान्तं न विदन्ति[3] यान्ति च वशं कान्या[4] मनोजन्मनः[5] ॥३॥

यथा च

दोर्मूलावधि[6] इति ॥ ४ ॥

यथा वा

गर्भग्रन्थिषु वीरुधां सुमनसो मध्येऽङ्कुरं पल्लवा
वाञ्छामात्रपरिग्रहः[7] पिकवधूकण्ठोदरे पञ्चमः ।
किञ्च त्रीणि जगन्ति जिष्णु दिवसैर्द्वित्रैर्मनोजन्मनो
देवस्यापि चिरोज्झितं[8] यदि भवेदभ्यासवश्यं धनुः[9] ॥५॥

यथा वा

हंसानां निनदेषु[10] इति ॥ ६ ॥

यथा च

सज्जेइ सुरहिमासो ण दाव अप्पेइ जुअइअणलक्खसुहे ।
अहिणअसहआरमुहे णवपल्लवपत्तले अणंगस्स सरे[11] ॥७॥

एवंविधविषये स्वाभाविकसौकुमार्यप्राधान्येन वर्ण्यमानस्य वस्तुनस्तदा-

---

(1) ०च्छां न lost in A. (2) विदौवलसा A. (3) वदन्ति A. (4) कन्या A. (5) मनोजं मनः A. (6) दोर्मूलाच्चदिति A. This verse is cited above, p. 75. (7) ञ्छा lost in A. (8) चिरोत्थितं A. (9) विद्धशालभञ्जिका i, 13=कवीन्द्रवचन० no. 68=Hemacandra p. 134 (anon)=सदुक्तिकर्णा० ii, 751. (10) See above p. 44. (11) The verse is corrupt in A. In B also, some of the readings are not clear. For ण दाव अप्पेइ, A reads ण अवणामेइ, B आपणामेइ; for जुअइअणलक्खसुहे, A reads जइसक्खसहे. In the second line, A reads अत्रणिव for अहिणव, and सहचापसुहे. The verse is quoted anonymously in ध्वन्यालोक p. 106. The छाया would be

सज्जयति सुरभिमासो न तावदर्पयति युवतिजनलक्ष्यसुखान् ।
अभिनवसहकारमुखान् नवपल्लवानङ्गस्य शरान् ॥

च्छादनभयादेव[1] न भूयसा तत्कविभिरलङ्करणमुपनिबध्यते। यदि वा कदाचिदुपनिबध्यते[2] तत्तदेव स्वाभाविकं सौकुमार्यं सुतरां समुन्मीलयितुम्, न पुनरलङ्कारवैचित्र्योपपत्तये। यथा

धौताञ्जने[3] च नयने[4] स्फटिकाच्छकान्ति[5]-
र्गण्डस्थली विगतकृत्रिमरागमोष्ठम्[6]।
अङ्गानि दन्तिशिशुदन्तविनिर्मलानि
किं यन्न सुन्दरमभूत्तरुणीजनस्य ॥ ८ ॥

अत्र 'दन्तिशिशुदन्तविनिर्मलानि' इत्युपमया स्वाभाविकमेव सौन्दर्यमुन्मीलितम्। यथा वा

अकठोरवारणवधूदन्ताङ्कुरस्पर्धिनः[7] इति ॥९॥

एतदेवातीव[8] युक्तियुक्तम्। यस्मान्महाकवीनां प्रस्तुतौचित्यानुरोधेन कदाचित् स्वाभाविकमेव सौन्दर्यमेकराज्येन विजृम्भयितुमभिप्रेतं[9] भवति, कदाचिद् विविधरचनावैचित्र्ययुक्तमिति[10]। अत्र पूर्वस्मिन्[11] पक्षे, रूपकादेरलङ्करणकलापस्य न तादृक्[12] तत्त्वम्। अपरस्मिन् पुनः, स एव सुतरां समुज्जृम्भते। तस्मादनेन न्यायेन सर्वातिशायिनः स्वाभाविकसौन्दर्यलक्षणस्य पदार्थपरिस्पन्दस्यालङ्कार्यत्वमेव[13] युक्तियुक्ततामालम्बते[14]। न पुनरलङ्करणत्वम्। सातिशयत्वशून्यधर्मयुक्तस्य वस्तुनो विभूषितस्यापि पिशाचादेरिव[15] तद्विदाह्लादकारित्वविरहाद-

(1) ०च्छादनतया वेदन B. (2) कश्चित् for कदाचित् B. (3) कैताञ्जने A. (4) वचने A. (5) स्फटिकात्सुकान्तिः B. (6) रागमोषः A. (7) स्पर्धिनः lost in A. The full verse is already quoted at p. 44 (हंसानां निनदेषु) above. (8) वनादेवानीय A. (9) ०जृम्भयितुं lost in A, which repeats स्वाभाविकमेव सौन्दर्यमेकराज्येन after this word. (10) ०सुक्तम् for ०युक्तम् in A. (11) पूर्व...वि तु A. (12) नादृत्यादृ for न तादृक् B. (13) अलङ्का० lost in A. (14) युक्तियुक्तताम् A. (15) पिपासादेरिव वद A.

नुपादेयत्वमेवेत्यलमतिप्रसङ्गेन[1]। यदि वा प्रस्तुतौचित्यमाहात्म्यान्मुख्यतया[2] भावस्वभावः सातिशयत्वेन वर्ण्यमानः स्वमहिम्ना[3] भूषणान्तरासहिष्णुः स्वयमेव शोभातिशयशालित्वादलङ्कार्यो[4]ऽप्यलङ्करणमित्यभिधीयते तदयमाम्नाकीन[5] एव पक्षः। तदतिरिक्तवृत्तेरलङ्कारान्तरस्य[6] अलङ्कारतात्पर्येणाभिधानाच्च[7] वयं विवदामहे।

एवमियेव वर्ण्यमानस्य वस्तुनो वक्रतेत्युक्तान्या काचिदस्तीत्याह—

अपरा सहजाहार्यकविकौशलशालिनी।
निर्मितिर्नूतनोल्लेखलोकातिक्रान्तगोचरा[8] ॥२॥

अपरा द्वितीया वर्ण्यमानवृत्तेः[9] पदार्थस्य निर्मितिः सृष्टिः। वक्रतेति सम्बन्धः। कीदृशी—सहजाहार्यकविकौशलशालिनी। सहजं स्वाभाविकमाहार्यं शिक्षाभ्याससमुल्लासितं च शक्तिव्युत्पत्तिपरिपाकप्रौढं यत् कविकौशलं निर्मातृनैपुण्यं तेन शालते श्लाघते या सा तथोक्ता। अन्यच्च कीदृशी—नूतनोल्लेखलोकातिक्रान्तगोचरा। नूतनस्त्वप्रथमो योऽसावुल्लिख्यत इत्युल्लेखस्तत्कालसमुल्लिख्यमानोऽतिशयः, तेन लोकातिक्रान्तः प्रसिद्धव्यापारातीतः[10] कोऽपि सर्वातिशायी गोचरो विषयो[11] यस्याः सा तथोक्तेति विग्रहः[12]। तस्मान्निर्मितिस्तेन रूपेण

---

(1) ०दनुपादेय० lost in A, and अधर्मप्रसङ्गेन for अलमतिप्रसङ्गेन A. (2) माहात्म्यान A. (3) सु for स्व A. (4) शोभातिशयशालित्वा० corrupt in A, some letters being lost. (5) यदयमसावाम्नाकीन B. (6) तदतिरिक्तवृत्ति० lost partially in A, which reads only प्रवृत्ति०. (7) ०न्नाव lost in A. B reads तिरस्कारतात्पर्येण (8) This कारिका is missin8 in A : but it is marked by the word [अ]परेत्यादि at the beginning ofthe वृत्ति. (9) वर्ण्यमानाव्याप्तवृत्तेः A. (10) ०व्यवहारादितः A. (11) Omitted in B. (12) सपर्चेति सविग्रहः A ( for इति विग्रहः ).

विच्छित्तिरित्यर्थः। तदिदमत्र तात्पर्यम्—यन्न[1] वर्त्तमानस्वरूपाः पदार्थाः कविभिरभूताः सन्तः क्रियन्ते, केवलं[2] सत्तामात्रेण परिस्फुरतां चैषां[3] तथाविधः कोऽप्यतिशयः पुनराधीयते, येन[4] कामपि सहृदय-हृदयहारिणीं रमणीयतामधिरोप्यते। तदिदमुक्तम्

लीनं वस्तुनि[5] इत्यादि ॥ १० ॥

तदेवं सत्तामात्रेणैव परिस्फुरतः पदार्थस्य कोऽप्यलौकिकः शोभातिशयविधायी[6] विच्छित्तिविशेषोऽभिधीयते, येन नूतनच्छायामनोहारिणा वास्तवस्थितितिरोधानप्रवणेन निजावभासोद्भासिततत्स्वरूपेण तत्कालोल्लिखित इव वर्णनीयपदार्थपरिस्पन्दमहिमा प्रतिभासते, येन विधातृव्यपदेशपात्रतां प्रतिपद्यन्ते कवयः। तदिदमुक्तम्

अपारे काव्यसंसारे कविरेव प्रजापतिः।
यथास्मै[7] रोचते विश्वं तथेदं[8] परिवर्तते[9] ॥ ११ ॥

सैषा सहजाहार्यभेदभिन्ना वर्णनीयस्य वस्तुनो द्विप्रकारा वक्रता। तदेवमाहार्या येयं सा प्रस्तुतविच्छित्तिविधा[10]प्यलङ्कारव्यतिरेकेण नान्या काचिदुपपद्यते। तस्माद् बहुविधतत्प्रकारभेदद्वारेणात्यन्तविततव्यवहाराः[11] पदार्थाः[12] परिदृश्यन्ते। यथा

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तद्युतिः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।

---

(1) यन्तु न A ; यदि न B. (2) B has dropped all the sentences from here up to the end of the first line of the श्लो० 11 below, but supplies it wrongly later on after रसवत्तमसा on p. 141, l. 4. (3) तेषां B. (4) Omitted in A. (5) See above p. 129. (6) ०विधायी omitted in A (7) यथा कस्मै B. (8) तद्विदं B. (9) अग्निपुराण ch. 338, 10=quoted in ध्वन्यालोक p. 222. (10) विधया A, which drops अपि. (11) पौत for वितत in A. (12) Omitted in B,

वेदाभ्यासजडः कथं[1] नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः[2] ॥ १२ ॥

अत्र कान्तायाः कान्तिमत्त्वमसोमविलाससम्पदां पदं[3] च रसवत्त्वमसा[4]मान्यसौष्ठवं च सौकुमार्यं प्रतिपादयितुं प्रत्येकं तत्परिस्पन्दप्राधान्यसमुचितसम्भावनानुमानमाहात्म्यात्[5] पृथक् पृथगपूर्वमेव निर्माणमुत्प्रेक्षितम्। तथा च[6] कारणत्रितयस्याप्येतस्य सर्वेषां विशेषणानां 'स्वयम्' इति सम्बध्यमानमेतदेव सुतरां समुद्दीपयति[7]। यः किल[8] स्वयमेव कान्तद्युतिस्तस्य सौजन्यसमुचितादरोचकित्वात्[9] कान्तिमत्कार्यकरणकौशलमेवोपपन्नम्[10]। यश्च स्वयमेव शृङ्गारैकरसस्तस्य रसिकत्वादेव रसवद्वस्तुविधानवैदग्ध्यमौचित्यं[11] भजते। यश्च स्वयमेव पुष्पाकरस्तस्याभिजात्यादेव[12] तथाविधः सुकुमार एव सर्गः समुचितः। तथा चोत्तरार्धे व्यतिरेकमुखेन[13] त्रयस्याप्येतस्य कान्तिमत्त्वादेर्विशेषणैरन्यथानुपपत्तिरुपपादिता[14]। यस्माद् वेदाभ्यासजडत्वात् कान्तिमद्वस्तुविधानानभिज्ञत्वम्, व्यावृत्तकौतुकत्वाद् रसवत्पदार्थे[15] विहितवैमुख्यम्, पुराणत्वात् सौकुमार्यसरसभावविरचनवैरस्यं प्रजापतेः प्रतीयते। तदेवमुत्प्रेक्षालक्षणोऽयमलङ्कारः कविना

---

(1) Omitted in B. (2) विक्रमोर्वशीय i, 8 = सुभाषितावली 1467 = शार्ङ्गधरपद्धति 3268 = दशरूपकावलोक *ad* iv, 2 (anon) = सरस्वतीकण्ठा० p 175 (anon) = साहित्यदर्पण p. 516 (anon) = काव्यप्रदीप *ad* x, 6 (anon) etc. (3) सम्पदास्पदं A. (4) After ०वत्त्वमसा, B introduces the passage dropped on p. 140, l. 2, after केवलं. (5) ०समुचितं B ; ०प्राधान्ये A. A reads ०नानुमानमाहात्म्यात्पूर्वमेव dropping पृथक् पृथक्. (6) lost in A. (7) समुद्दपनी A. (8) किञ्च A. (9) ०समुचितादाराचकित्वात् B ; ०न्यसमुचित lost in A, which reads भोज० for सौज०. (10) काव्यकरण for कार्यकरण in A. (11) ०मौचित्यं lost in A. (12) भतिजाड्या० for भाभिजात्या० in A. (13) ०मुख्यं A. (14) ०विशे० lost in A. (15) ०त् र० lost in A.

वर्णनीयवस्तुन: कमप्यलौकिकलेखविलक्षणमतिशयमाधातुं[1] निबद्धः। स च स्वभावसौन्दर्यमहिम्ना स्वयमेव तत्सहायसम्पदा[2] सह अर्थमहनीयतामोहमान:[3] सन्देहसंसर्गमङ्गीकरोतीति तेनोपबृंहितः। तस्माल्लोकोत्तरनिर्मातृनिमित्तत्वं[4] नाम नूतन: कोऽप्यतिशय: पदार्थस्य वर्ण्यमानवृत्तेर्नायिकास्वरूपसौन्दर्यलक्षणस्यात्र निर्मित: कविना, येन तदेव तत्प्रथममुत्पादितमिव प्रतिभाति।

यत्राप्युत्पाद्यं वस्तु प्रबन्धार्थपूर्वतया[5] वाक्यार्थस्तत्कालमुल्लिख्यते कविभि:, तस्मिन् स्वसत्तासमन्वयेन स्वयमेव परिस्फुरतां पदार्थानां तथाविधपरस्परान्वयलक्षणसम्बन्धोपनिबन्धनं नाम नवीनमतिशयमात्रमेव[6] निर्मितिविषयतां नीयते, न पुन: स्वरूपम्। यथा

कस्त्वं भो दिवि मालिको[7]ऽहमिह किं पुष्पार्थमभ्यागत:
किं ते सूनमह[8] क्रयो यदि[9] महच्चित्रं तदाकर्ण्यताम्।
सङ्ग्रामेष्वलभा[10]भिधाननृपतौ दिव्याङ्गनाभि: स्रज:
प्रोज्झन्तीभिरविद्यमानकुसुमं[11] यस्मात्कृतं नन्दनम्॥ १२॥

तदेवंविधे विषये वर्णनीयवस्तुविशिष्टातिशयविधायी विभूषणविन्यासो विधेयतां प्रतिपद्यते। तथा च—प्रकृतमिदमुदाहरणमलङ्करणकल्पनं विना सम्यङ् न[12] कथञ्चिदपि वाक्यार्थसङ्गतिं[13] भजते। यस्मात्

---

(1) आधारत्वं for आधातुं in B. (2) साहाय्य for सहाय in A. (3) महार्घाहनीयतामोहमान: A. (4) लोकोत्तरं निर्मातुं A. (5) यत्राप्युत्पाद्यवस्तुप्रबन्धार्थवदपूर्वतया B. (6) The word नवीन is corrupt in A and reads नयिनि. (7) The verse is very corrupt in A. The beginning reads रसं बोधितो. (8) किं ते सूवमहले B, contrary to metre. A reads किं तेऽस्तु महान् missing one metrical syllable. (9) तयोयदि A. (10) The name is lost in A. B reads °मेष्वलप्भ contrary to metre. (11) °ज्झन्° lost in A. (12) अप्पष्ट B. (13) वाकार्थ: सङ्गतिं B.

प्रत्यक्षादिप्रमाणोपपत्तिनिश्चयाभावात् स्वाभाविकं वस्तु धर्मितया व्यवस्थापनां न सहते, तस्माद्विदग्धकविप्रतिभोल्लिखितालङ्करणगोचरत्वेनैव सहृदयहृदयाह्लादमादधाति। तथा च, दुःसहसमरसमयसमुचितशौर्यातिशयश्लाघयाप्रस्तुतनरनाथविषयि[1] वल्लभलाभरभसोल्लसितसुरसुन्दरीसमूहसंगृह्यमाणमन्दारादिकुसुमदामसहस्रसम्भावानुमाना[2]-न्नन्दनोद्यानपादपप्रसूनसमृद्धिप्रध्वंसभावसिद्धिः[3] समुत्प्रेक्षिता। यस्मा-त्प्रेक्षाविषयं वस्तु कवयस्तदिवेति तदेवेति वा द्विविधमुपनिबध्नन्तीत्ये-त[त्त]ल्लक्षणावसर एव विचारयिष्यामः। तदेवमियमुत्प्रेक्षा पूर्वार्धविहिता[4] प्रस्तुतप्रशंसोपनिबन्धबन्धुराप्रकृतपार्थिवप्रतापातिशयपरिपोषप्रवणतया[5] सुतरां समुल्लासमाना तद्विदावर्जनं जनयति। सातिशयत्वम्

उत्प्रेक्षातिशयान्विता[6] ॥ १४ ॥

इत्यस्याः, स्वलक्षणानुप्रवेश इत्यतिशयोक्तेश्च[7],

कोऽलङ्कारोऽनया विना[8] ॥ १५ ॥

इति सकलालङ्करणानुग्राहकत्वम्। तस्मात् पृथगतिशयोक्तिरिवेयं मुख्यतयेत्युच्यमानेऽपि[9] न किञ्चिदतिरिच्यते[10]। कविप्रतिभोत्प्रेक्षितत्वेन चात्यन्तमसम्भाव्यमप्युपनिबध्यमानमनयैव[11] युक्त्या समञ्जसतां[12] गाहते। न पुनः स्वातन्त्र्येण। यद्वा कारणतो लोकातिक्रान्तगोचरत्वेन[13] वचसः सैवेयमित्यस्तु, तथापि प्रस्तुतातिशयविधानव्यतिरेकेण न किञ्चिदपूर्वमत्रास्ति।

---

(1) ऽ०तरताथ० A. (2) ०मप० for दाम, समर्प्यमाण for संगृह्यमाण, and ०सम्भावनात् नन्दनोद्यान० in A ; ०सम्भावनानुमानानन्त: B. (3) ०प्रध्वंसा० B. (4) पूर्ववद्विहिता (5) ०प्रसवो ( for ०प्रशंसो० ), बन्धुरो, प्रकृतिप प्रत्ययातिशय A : बन्धुरो B. (6) भामह ii, 91. (7) भामह ii, 85. (8) ०नुप्रवेश्य···योक्तेश्च A. (9) मुख्येत् उच्यमाने A. (10) किञ्चिदिति A. (11) ०सम्भाव्यमुपपत्तिबध्यमानमनोप A. (12) समुज्ञासतां A. (13) ०क्रान्तगोच० lost in A.

तदेवमभिधानस्य पूर्वमभिधेयस्य[1] चेह वक्रतामभिधायेदानीं वाक्यस्य वक्रत्वमभिधातुमुपक्रमते[2]—

**मार्गस्थवक्रशब्दार्थगुणालङ्कारसम्पदः ।**
**अन्यद्वाक्यस्य वक्रत्वं तथाभिहितिजीवितम् ॥३॥**
**मनोज्ञफलकोल्लेखवर्णच्छायाश्रियः पृथक् ।**
**चित्रस्येव मनोहारि कर्तुः किमपि कौशलम्[3] ॥४॥**

अन्यद्वाक्यस्य वक्रत्वम्—वाक्यस्य परस्परान्वितवृत्तेः पदसमुदायस्यान्यदपूर्वं व्यतिरिक्तमेव वक्रत्वं वक्रभावः[4] । भवतीति सम्बन्धः, क्रियान्तराभावात्[5] । कुतः—मार्गस्थवक्रशब्दार्थगुणालङ्कारसम्पदः । मार्गाः सुकुमारादयस्तत्रस्थाः केचिदेव वक्राः प्रसिद्धव्यवहारव्यतिरेकिणो ये शब्दार्थगुणालङ्कारास्तेषां सम्पत्[6] काप्युपशोभा[7] तस्याः । पृथग्भूतं किमपि वक्रत्वान्तरमेव[8] । कीदृशम्—तथाभिहितिजीवितम् । तथा तेन प्रकारेण केनाप्यव्यपदेश्येन याभिहितिः[9] काप्यपूर्वैवाभिधा[10] सैव जीवितं सर्वस्वं यस्य तत्तथोक्तम् । किंस्वरूपमित्याह—कर्तुः किमपि कौशलम् । कर्तुर्निर्मातुः[11] किमप्यलौकिकं यत्कौशलं नैपुण्यं तदेव वाक्यस्य वक्रत्वमित्यर्थः[12] । कथञ्चिद्—चित्रस्येव[13], आलेख्यस्य यथा । मनोहारि हृदयरञ्जकं[14] प्रकृतोपकरणव्यतिरेकि कर्तुरेव कौशलं किमपि पृथग्भूतं व्यतिरिक्तम् । कुत इत्याह—मनोज्ञफलको-

---

(1) पूर्वाभिधेयस्य A. (2) A is exceedingly corrupt here and reads वक्रतामभिधा···भिधायावाक्यमभिधातुमुपक्रमते. (3) These two कारिकाs are missing in A, but marked by मार्गस्थेत्यादि instead at the beginning of the वृत्ति. (4) ०त्वं व० lost in A. (5) योगात् for भावात् in A. (6) संयम B. (7) काप्य च शोभमूतं किमपि A. (8) तत्त्वान्तरमेव B. (9) ०भिहितेः A. (10) कीव्यपूर्वाभिधास्येव A. (11) विधातुः for निर्मातुः B. (12) तत्त्वमित्यर्थः B. (13) तस्येव A. (14) हृदयाह्लादकः A.

ल्लेखवर्णच्छायाश्रियः। मनोज्ञाः काश्चिदेव हृदयहारिण्यो याः फलकोल्लेखवर्णच्छायास्तासां श्रीरूपशोभा तस्याः। पृथग्रूपं किमपि तत्त्वान्तरमेवेत्यर्थः। फलकमालेख्याधारभूता भित्तिः, उल्लेखश्चित्रसूत्रप्रमाणोपपन्नं रेखाविन्यसनमात्रम्, वर्णा रञ्जकद्रव्यविशेषाः, छाया कान्तिः। तदिदमत्र तात्पर्यम्—यथा चित्रस्य किमपि[1] फलकाद्युपकरणकलापव्यतिरिक्ति सकलप्रकृतपदार्थजीवितायमानं चित्रकरकौशलं पृथक्त्वेन[2] मुख्यतयोल्लासते[3], तथैव वाक्यस्य मार्गादिप्रकृतपदार्थसार्थव्यतिरेकि कविकौशललक्षणं किमपि सहृदयसंवेद्यं सकलप्रस्तुतपदार्थस्फुरितभूतं वक्रत्वमुज्जृम्भते[4]।

तथा च, भावस्वभावसौकुमार्यवर्णने शृङ्गारादिरसस्वरूपसमुन्मीलने वा विविधविभूषणविन्यास[5]विच्छित्तिविरचने च परः परिपोषातिशयसहृदाह्लादकारितायाः कारणम्। पदवाक्यैकदेशवृत्तिर्वा[6] यः कविदक्रताप्रकारस्तस्य कविकौशलमेव निबन्धनतया व्यवतिष्ठते। यस्मादाकल्पमेवेषां तावन्मात्रस्वरूपनियतनिष्ठतया व्यवस्थितानां स्वभावालङ्करणवक्रताप्रकाराणां नवनवोल्लेखविलक्षणं चेतनचमत्कारकारि किमपि स्वरूपान्तरमेतस्मादेव समुज्जृम्भते। तेनेदमभिधीयते[7]—

आसंसारं कइपुंगवेहिं पडिदिअहगहिअसारो[8] वि।
अज्जवि अभिन्नमुद्दो व्व जअइ वाआं परिप्फंदो[9] ॥ १६ ॥

---

(1) Repeated in A. (2) पृथक् केन A. (3) मुख्यतया भासते A. (4) ०मुज्जृम्भते A. (5) The whole passage from here to the beginning of the word विलाससुहृदां of the verse तेषां गोपवधू० next is lost in A. (6) वृत्तिं वा B. (7) येन for तेन in B. (8) तद्दिअह० B; our conjectural emendation is from the वृत्ति below, where प्रतिदिवस is used twice, as well as from राजशेखर's sankritisation of this verse. (9) This verse occurs in Sanskrit in राजशेखर's काव्यमीमांसा (p. 52), as follows;

अत्र सर्गारम्भात् प्रभृति कविप्रधानैः प्रातिस्विकप्रतिभापरिस्पन्द-माहात्म्यात् प्रतिदिवसगृहीतसर्वस्वोऽप्यद्यापि[1] नवनवप्रतिभासानन्त्य-विजृम्भणादनुद्घाटितप्राय इव यो वाक्यपरिस्पन्दः स जयति सर्वोत्कर्षेण वर्तते इत्येवमस्मिन् सुसङ्गतेऽपि वाक्यार्थे कविकौशलस्य विलसितं किमप्यलौकिकमेव परिस्फुरति। यस्मात् स्वाभिमानध्वनिप्राधान्येन तेनैतदभिहितम् यथा—आसंसारं कविपुङ्गवैः प्रतिदिवसगृहीतसारो ऽप्यद्याप्यभिन्नमुद्र[2] इवायम्; एवमपरिज्ञाततत्त्वतया न केनचित् किमप्येतस्माद् गृहीतमिति मत्प्रतिभोद्घाटितपरमार्थस्येदानीमेव मुद्रा-बन्धोद्भेदो भविष्यतीति लोकोत्तरस्वपरिस्पन्दसाफल्यापत्तेर्वाक्यपरिस्पन्दो जयतीति सम्बन्धः।

यद्यपि रसस्वभावालङ्काराणां सर्वेषां कविकौशलमेव जीवितम्, तथाप्यलङ्कारस्य विशेषतस्तदनुग्रहं विना वर्णनाविषयवस्तुनो भूषणा-भिधायित्वेनाभिमतस्य स्वरूपमात्रेण परिस्फुरतो यथार्थत्वेन निबध्य-मानस्य तद्विदाह्लादविधानानुपपत्तेर्मनाङ्मात्रमपि न वैचित्र्यमु-त्प्रेक्षामहे, प्रचुरप्रवाहपतितेतरपदार्थसामान्येन प्रतिभासनात्। यथा

दूर्वाकाण्डमिव श्यामा तन्वी श्यामालता यथा[3] ॥ १७ ॥

इत्यत्र[4] नूतनोल्लेखमनोहारिणः पुनरेतस्य लोकोत्तरविन्यसनविच्छित्ति-विशेषितशोभातिशयस्य किमपि तद्विदाह्लादकारित्वमुन्मिष्यते। यथा

अस्याः सर्गविधौ[5] इति ॥ १८ ॥

यथा

किं तारुण्यतरोः[6] इति ॥ १९ ॥

---

आसंसारमुदारैः कविभिः प्रतिदिनगृहीतसारोऽपि।
अद्याप्यभिन्नमुद्रो विभाति वाचां परिस्पन्दः ॥

(1) ०सर्वस्वोपद्योपि B. (2) सारोप्यद्यप्यभिन्नमुद्रा B. (3) तथा B. (4) इति च B. (5) See above p. 140. (6) See above p. 60.

तदेवं पृथग्भावेनापि भवतोऽस्य कविकौशलायत्तवृत्तित्वलक्षणवाक्यवक्रतान्तर्भाव एव युक्तियुक्ततामवगाहते। तदिदमुक्तम्

वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा।
यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति[1] ॥ २० ॥

स्वभावोदाहरणं यथा

तेषां गोपवधूविलाससुहृदां[2] राधारहःसाक्षिणां
क्षेमं भद्र कलिन्दशैलतनयातीरे[3] लतावेश्मनाम्।
विच्छिन्ने स्मरतल्पकल्पनमृदुच्छेदोपयोगेऽधुना[4]
ते[5] जाने जरठीभवन्ति विगलन्नीलत्विषः पल्लवाः[6] ॥ २१ ॥

अत्र यद्यपि स्वहृदयसंवेद्यं वस्तुसम्भवि स्वभावमात्रमेव वर्णितम्, तथाप्युत्तानतया व्यवस्थितस्यास्य विरलविदग्धहृदयैकगोचरं किमपि नूतनोल्लेखमनोहारि पदार्थान्तरलीनवृत्ति[7] सूक्ष्मसुभगं तादृक् स्वरूपमुन्मीलितं येन वाक्यवक्रतात्मनः कविकौशलस्य काचिदेव काष्ठाधिरूढिरुपपद्यते[8]। यस्मात्तद्व्यतिरिक्तवृत्तिरर्थातिशयो न कश्चिल्लभ्यते।

रसोदाहरणं यथा

लोको यादृशमाह साहसधनं तं[9] क्षत्रियापुत्रकं
स्यात्सत्येन[10] स तादृगेव[11] न भवेद्वार्त्ता विसंवादिनी[12]।
एकां कामपि कालविप्रुषममी शौर्योष्मकण्डूव्यय[13]-
व्यग्राः स्युश्चिरविस्मृतामरचमूडिम्बाहवा बाहवः ॥ २२ ॥

---

(1) This is कारिका i, 20. (2) तेषां गोपवधू॰ lost in A. (3) कलिन्द lost in A. (4) सुर for स्मर A. (5) Lost in A: B reads तेजा only. (6) Quoted in ध्वन्यालोक p. 87 (anon). (7) पदार्थातलामाहृत्ति B. (8) रूढीपलभ्यते A. (9) कं A. (10) स्यात्मन्येन B. (11) ॰दृगे॰ lost in A. (12) वार्त्तापि संवादिनी A. (13) कन्द for कण्डू A. The last two lines of this verse have been already quoted above p. 33.

अत्रोत्साहाभिधानः स्थायिभावः[1] समुचितालम्बनविभावलक्षणविषय[2]-सौन्दर्यातिशयश्लाघाश्रद्धालुतया विजिगीषोर्वैदग्ध्यभङ्गीभणितिवैचित्र्येण परां परिपोषपदवीमधिरोपितः सन् रसतामानीयमानः[3] किमपि[4] वाक्यवक्रभावस्वभावं कविकौशलमावेदयति। अन्येषां पूर्वप्रकरणोदाहरणानां प्रत्येकं तथाभिहितिजीवितलक्षणं वक्रत्वं स्वयमेव[5] सहृदयैर्विचारणीयम्।

वक्रतायाः प्रकाराणामौचित्यगुणशालिनाम्[6]।
एतदुत्तेजनायालं[7] स्वस्पन्दमहतामपि ॥ २३ ॥
रसस्वभावालङ्कारा आसंसारमपि स्थिताः[8]।
अनेन नवतां[9] यान्ति तद्विदाह्लाददायिनीम्[10] ॥ २४ ॥

इत्यन्तरश्लोकौ[11]।

एवमभिधानाभिधेयाभिधालक्षणस्य काव्योप[12]योगिनस्त्रितयस्य स्वरूपमुल्लिख्य वर्णनीयस्य[13] वस्तुनो विषयविभागं विदधाति—

**भावानामपरिम्लानस्वभावौचित्यसुन्दरम्।**
**चेतनानां जडानां च स्वरूपं द्विविधं स्मृतम्[14] ॥५॥**

भावानां वर्ण्यमानवृत्तीनां स्वरूपं परिस्पन्दः। कीदृशम्—द्विविधम्। द्वे विधे प्रकारौ यस्य तत्तथोक्तम्। स्मृतं[15] सूरिभिराम्नातम्[16]। केषां

---

(1) भावः lost in A : so also the next letter स. (2) ०लवन for लम्बन A. (3) सन्रसतां B ; स तु रसता A. (4) ०मानीयमानः कि० lost in A. (5) ०वक्रत्वं स्वय० lost in A. (6) ०शालिनी A. (7) ते...दत्तेजनायालं A. (8) ०ता: lost in A. (9) वक्रतां A. (10) ०ह्लादकारिणी A. (11) अन्तरश्लोकौ A. (12) The word is corrupt in A—कादयो. (13) वर्णनी० lost in A. (14) This कारिका is missing in A, but marked by भावानामित्यादि instead at the outset of the वृत्ति. (15) Omitted in B. (16) सूरिभिरात्तां A.

भावानाम्—चेतनानां जडानां च। चेतनानां संविद्वतां[1] प्राणिनामिति यावत्; जडानां तद्व्यतिरेकिणां चैतन्यशून्यानाम्। एतदेव च धर्मिद्वैविध्यं धर्मद्वैविध्यस्य[2] निबन्धनम्। कीदृक्स्वरूपम्—अपरिम्लानस्वभावौचित्यसुन्दरम्[3]। अपरिम्लानः प्रत्यग्रः परिपोषपेशलो यः स्वभावः पारमार्थिको धर्मस्तस्य यदौचित्यमुचितभावः प्रस्तावोपयोग्यदोषदुष्टत्वं तेन सुन्दरं सुकुमारं[4] तद्विदाह्लादकमित्यर्थः।

एतदेव द्वैविध्यं विभज्य[5] विचारयति—

**तत्र पूर्वं प्रकाराभ्यां द्वाभ्यामेव विभिद्यते।**
**सुरादिसिंहप्रभृतिप्राधान्येतरयोगतः[6] ॥ ६ ॥**

तत्र द्वयोः स्वरूपयोर्मध्यात् पूर्वं यत्प्रथमं चेतनपदार्थसम्बन्धि[7] तद् द्वाभ्यामेव राश्यन्तराभावात् प्रकाराभ्यां विभिद्यते भेदमासादयति, द्विविधमेव सम्पद्यते। कस्मात्—सुरादिसिंहप्रभृतिप्राधान्येतरयोगतः[8]। सुरादिः त्रिदशप्रभृतयो ये चेतनाः सुरासुरसिद्धविद्याधरगन्धर्वप्रभृतयः, ये चान्ये सिंहप्रभृतयः केसरिप्रमुखास्तेषां यत्प्राधान्यं मुख्यत्वमितरदप्राधान्यं[9] च ताभ्यां यथासंख्येन प्रत्येकं यो योगः सम्बन्धस्तस्मात् कारणात्।

तदेवं सुरादीनां मुख्यचेतनानां स्वरूपमेकं कवीनां वर्णनास्पदम्। सिंहादीनाममुख्यचेतनानां पशुमृगपक्षिसरीसृपाणां स्वरूपं द्वितीयमित्येतदेव विशेषेणोन्मीलयति—

---

(1) संविदानां B. (2) This passage is exceedingly corrupt in A. (3) Omitted in B. (4) Omitted in B; but A repeats this word. (5) द्वैविध्यविभक्त A. (6) This कारिका is missing in A, but marked by तत्रेत्यादि instead. (7) A adds अचेतनपदार्थसम्बन्धि after this. (8) Omitted in B. (9) इतरप्राधान्यं A.

मुख्यमक्लिष्टरत्यादिपरिपोषमनोहरम् ।
स्वजात्युचितहेवाकसमुल्लेखोज्ज्वलं परम्[1] ॥७॥

मुख्यं यत्प्रधानं चेतनसुरासुरादिसम्बन्धिस्वरूपं[2] तदेवंविधं सत्कवीनां वर्णनास्पदं भवति स्वव्यापारगोचरतां प्रतिपद्यते। कीदृशम्—अक्लिष्टरत्यादिपरिपोषमनोहरम्। अक्लिष्टः कदर्थनाविरहितः प्रत्यग्रतामनोहरो[3] यो रत्यादिः स्थायिभावस्तस्य परिपोषः शृङ्गारप्रभृतिरसत्वापादनम्—स्थाय्येव तु रसो भवेदिति न्यायात्—तेन मनोहरं हृदयहारि। अत्रोदाहरणानि विप्रलम्भशृङ्गारे चतुर्थेऽङ्के विक्रमोर्वश्यामुन्मत्तस्य पुरूरवसः प्रलपितानि। यथा

तिष्ठेत्कोपवशात्प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।
तां हर्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः[4] ॥ २५ ॥

अत्र राज्ञो वल्लभाविरहवैधुर्यदशावेशविवशवृत्ते[5]स्तदसंप्राप्तिनिमित्तमनधिगच्छतः[6] प्रथमतरमेव स्वाभाविकसौकुमार्यसम्भाव्यमानम्[7] अनन्तरोचितविचारापसार्यमाणोपपत्ति[8] किमपि तात्कालिकविकल्पोल्लिख्यमानमनवलोकनकारणमुत्प्रेक्ष्यमाणस्य तदासादन[9]समन्वयासम्भवान्नैराश्यनिश्चयविमूढमानसतया रसः परां परिपोषपदवीमधिरोपितः। तथा चैतदेव वाक्यान्तरैरुद्दीपितं यथा

---

(1) This कारिका is missing in A, but marked by मुख्यमित्यादि instead. (2) ०सुरासुरादिसम्बन्धिस्वरूपं B. (3) प्रत्यग्रो नाम A. (4) विक्रमोर्वशीय iv, 2. (5) A is corrupt after ०दशा (6) ०मदधिगच्छतः A. (7) ०मार्यसम्भाव्य० lost in A. (8) ०विचाराप्रसार्यमाणो० B; ०पपत्तिः A. (9) A is corrupt here and some letters appear to have been lost before नैराश्य.

पद्भ्यां स्पृशेद्वसुमतीं यदि सा सुगात्री
मेघाभिवृष्टसिकतासु वनस्थलीषु ।
पश्चान्नता गुरुनितम्बतया ततोऽस्या
दृश्येत चारुपदपङ्क्तिरलक्तकाङ्का[1] ॥ २६ ॥

अत्र पद्भ्यां वसुमतीं[2] कदाचित् स्पृशेदित्याशंसया तत्प्राप्तिः सम्भाव्येत । यस्माज्जलधरसलिलसेकसुकुमारसिकतासु वनस्थलीषु गुरुनितम्बतया तस्याः पश्चान्नतत्वेन नितरां मुद्रितसंस्थाना रागोपरक्ततया[3] रमणीयवृत्तिश्चरणविन्यासपरम्परा दृश्येत, तस्मान्नैराश्यनिश्चितिरिव[4] सुतरां समुज्जृम्भिता, या तदुत्तरवाक्योन्मत्तविलपितानां निमित्ततामभजत्[5] ।

करुणरसोदाहरणानि तापसवत्सराजे द्वितीयेऽङ्के वत्सराजस्य परिदेवितानि । यथा

धाराविश्म विलोक्य दीनवदनो भ्रान्त्वा च लीलागृहा[6]-
न्निश्वस्यायतमाशु केसरलतावीथीषु कृत्वा दृशः[7] ।
किं मे पार्श्वमुपैषि पुत्रक कृतैः किं चाटुभिः क्रूरया
मात्रा त्वं परिवर्जितः सह मया यान्त्यातिदीर्घां भुवम्[8] ॥ २७ ॥

अत्र रसपरिपोषनिबन्धनं विभावादिसम्पत्समुदयः कविना सुतरां समुज्जृम्भितः । तथा चास्यैव वाक्यस्यावतारकं विदूषकवाक्यमिवं प्रयुक्तम्—

पमादो[9] एसो क्खु देवीए[10] पुत्तकिदको[11] हरिणपोदो अत्तभवंतं[12] अणुसरदि[13] ॥ २८ ॥

---

(1) विक्रमोर्वशीय iv, 6. (2) A adds यदि before कदाचित्. (3) वागो॰ for रागो॰ in A. (4) तैराश्य for नैराश्य in A. (5) A is corrupt here. (6) लीलया गृहात् B. (7) दिशः A. (8) तापसवत्सराज ii, 71 a (Berlin Ms). (9) अहो A. (10) दाविव A. (11) किदसु A. (12) पुत्रत्वभवन्तं (!) A. (13) तापसवत्सराज॰, loc. cit.

एतेन करुणरसोद्दीपनविभावता हरिणपोतकथारागृहप्रभृतीनां सुतरां समुत्पद्यते[1]। तथा चायमपरः क्षते क्षारावक्षेप[2] इति क्रमवद्वचनादनन्तरमेतत्परत्वेनैव[3] वाक्यान्तरमुपनिबद्धम्, यथा

कर्णान्तस्थितपद्मरागकलिकां भूयः समाकर्षता[4]
चञ्च्वा दाडिमबीजमित्यभिहता[5] पादेन गण्डस्थली।
येनासौ तव तस्य नर्मसुहृदः[6] खेदान्मुहुः क्रन्दतो
निःशङ्कं[7] न शुकस्य किं प्रतिवचो देवि त्वया दीयते[8] ॥ २९ ॥

अत्र शुकस्यैवंविधदुर्ललितयुक्तत्वं वाल्लभ्य[9]प्रतिपादनपरत्वेनोपात्तम्। 'असौ' इति कपोलस्थल्याः स्वानुभवस्वदमानसौकुमार्योत्कर्षपरामर्शः। एवमेवोद्दीपनविभावैकजीवितत्वेन करुणरसः काष्ठाधिरूढिरमणीयतामनीयत।

एवं विप्रलम्भशृङ्गारकरुणयोः सौकुमार्यादुदाहरणप्रदर्शनं विहितम्। रसान्तराणामपि स्वयमेवोत्प्रेक्षणीयम्।

एवं द्वितीयमप्रधानचेतनसिंहादिसम्बन्धि[10] यत्स्वरूपं तदित्थं कवीनां[11] वर्णनास्पदं सम्पद्यते। कीदृशम्—स्वजात्युचितहेवाकसमुल्लेखोज्ज्वलम्। स्वा प्रत्येकमात्मीया सामान्यलक्षणवस्तुस्वरूपा[12] या जातिस्तस्याः समुचितो यो हेवाकः[13] स्वभावानुसारी परिस्पन्दस्तस्य समुल्लेखः सम्यगुल्लेखनं[14] वास्तवेन रूपेणोपनिबन्धस्तेनोज्ज्वलं भ्राजिष्णु[15], तद्विदाह्लादकारीति यावत्। यथा

---

(1) समुद्दीप्यते A. (2) ०वसेक A. (3) अन्तरम् for अनन्तरम् in B. (4) समाकर्ष्यता B; समाकर्षताम् A. (5) ०भिहिता A. (6) नर्मसुदः B. (7) निश्शङ्के A; नि.शूके B. (8) तापसवत्सराज ii, 71 b (Berlin Ms.) (9) तल्लभ्य A. (10) सम्बन्धे B; सबंधी A. (11) Omitted in B. (12) ०क्षणव० lost in A. (13) ०स्यैकवाकः A. (14) सम्यगुल्लिखनं B. (15) उज्ज्वलं भ्रा० lost in A.

कदाचिदेतेन च पारियात्र[1]-
गुहागृहे मीलितलोचनेन ।
व्यत्यस्त हस्तद्वितयोपविष्ट[2]-
दंष्ट्राङ्कुराञ्चच्चिबुकं प्रसुप्तम्[3] ॥ ३० ॥

अत्र गिरिगुहागेहान्तरे[4] निद्रामनुभवतः केसरिणः स्वजातिसमुचितं स्थानकमुल्लिखितम् । यथा वा

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम् ।
शष्पैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः[5] कीर्णवर्त्मा
पश्योदग्रे[6] प्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति[7] ॥ ३१ ॥

एतदेव[8] प्रकारान्तरेणोन्मीलयति—

रसोद्दीपनसामर्थ्यविनिबन्धनबन्धुरम् ।
चेतनानाममुख्यानां जडानां चापि भूयसा[9] ॥७॥

चेतनानां प्राणिनाममुख्यानामप्रधानभूतानां यत्स्वरूपं तदेवंविधं तद्वर्णनीयतां प्रतिपद्यते प्रस्तुताङ्गतयोपयुज्यमानम्[10] । कीदृशम्—रसोद्दीपनसामर्थ्यविनिबन्धनबन्धुरम् । रसाः शृङ्गारादयस्तेषामुद्दीपनमुल्लासनं परिपोषस्तस्मिन् सामर्थ्यं शक्तिस्तया विनिबन्धनं निवेशस्तेन बन्धुरं हृदयहारि । यथा

चूताङ्कुरास्वादकषायकण्ठः
पुंस्कोकिलो यन्मधुरं[11] चुकूज ।

---

(1) पारि repeated in A. (2) ०व्यस्तद्विकयोपविष्टं A. (3) ०प्तम् lost in A. (4) गिरि lost in A. (5) वितत for विवृत in B. (6) ०दग्र A. (7) अभिज्ञानशकुन्तल i, 7. (8) तदेव A. (9) This कारिका is missing in A, but marked by रसोद्दीपनेत्यादि instead. (10) A is corrupt and reads: प्रस्तुतान्तयोगयुक्तमानं. (11) ०कोकिलोऽयं मधुरं A.

मनस्विनीमानविघातदक्षं
तदेव जातं वचनं स्मरस्य[1] ॥ ३२ ॥

जडानां चापि भूयसा। जडानामचेतनानां सलिलतरुकुसुमसमयप्रभृतीनामेवंविधं स्वरूपं रसोद्दीपनसामर्थ्यविनिबन्धनबन्धुरं वर्णनीयतामवगाहते। यथा

इदमसुलभवस्तुप्रार्थनादुर्निवारं
प्रथममपि मनो मे पञ्चबाणः[2] क्षिणोति।
किमुत मलयवातोन्मूलितापाण्डुपत्रै-
रुपवनसहकारैर्दर्शितेष्वङ्कुरेषु[3] ॥ ३३ ॥

यथा वा

उद्भेदाभिमुखाङ्कुराः कुरवकाः शैवालजालाकुल-
प्रान्तं भान्ति सरांसि फेनपटलैः सीमन्तिताः[4] सिन्धवः।
किञ्चास्मिन् समये कृशाङ्गि विलसत्कन्दर्पकोदण्डक-
क्रीडाभाञ्जि भवन्ति सन्ततलताकीर्णान्यरण्यान्यपि ॥ ३४ ॥

एवं स्वाभाविकसुन्दरपरिस्पन्दनिबन्धनं पदार्थस्वरूपमभिधाय तदेवोपसंहरति—

**शरीरमिदमर्थस्य रामणीयकनिर्भरम्।**
**उपादेयतया ज्ञेयं कवीनां वर्णनास्पदम्[5] ॥८॥**

अर्थस्य वर्णनीयस्य वस्तुनः शरीरमिदम् उपादेयतया ज्ञेयं[6] ग्राह्यत्वेन बोद्धव्यम्। कीदृशं सत्—रामणीकनिर्भरम्। सौन्दर्यपरिपूर्णम्, औपहत्यरहितत्वेन तद्विदावर्जकमिति यावत्। कवीनामेत-

---

(1) कुमार० iii, 32. (2) पार्श्वबाणः B. (3) विक्रमोर्वशी ii, 6= सरस्वतीकण्ठा० p. 304. (4) फेनपटलीढाननाः A. प्रान्तां भासि B; व्राता भान्ति A. (5) This कारिका is missing in A, but marked by शरीरमित्यादि instead. (6) B here repeats ग्राह्यतया ज्ञेयं.

देव यस्माद्वर्णनास्पदमभिधाव्यापारगोचरम्। एवंविधस्यास्य स्वरूपशोभातिशयभ्राजिष्णोर्विभूषणान्युपशोभान्तरमारभन्ते[1]।

एतदेव प्रकारान्तरेण विचारयति—

**धर्मादिसाधनोपायपरिस्पन्दनिबन्धनम्।**
**व्यवहारोचितं चान्यल्लभते वर्णनीयताम्[2] ॥९॥**

व्यवहारोचितं चान्यत्। अपरं पदार्थानां चेतनाचेतनानां स्वरूपमेवंविधं वर्णनीयतां[3] लभते कविव्यापारविषयतां[4] प्रतिपद्यते। कीदृशम्—व्यवहारोचितम्, लोकवृत्तयोग्यम्। कीदृशं सत्—धर्मादिसाधनोपायपरिस्पन्दनिबन्धनम्। धर्मादिचतुर्वर्गस्य साधने सम्पादने उपायभूतो यः परिस्पन्दः स्वविलसितं तदेव निबन्धनं यस्य तत्तथोक्तम्। तदिदमुक्तं भवति—यत् काव्ये वर्ण्यमानवृत्तयः प्रधानचेतनप्रभृतयः सर्वे पदार्थाश्चतुर्वर्गसाधनोपायपरिस्पन्दप्राधान्येन वर्णनीयाः, येऽप्यप्रधानचेतनस्वरूपाः पदार्थास्तेपि[5] धर्मार्थाद्युपायभूतस्वविलासप्राधान्येन कवीनां वर्णनीयतामवतरन्ति। तथा च राज्ञां शूद्रकप्रभृतीनां मन्त्रिणां च शुकनासमुख्यानां चतुर्वर्गानुष्ठानोपदेशपरत्वेनैव चरितानि[6] वर्ण्यन्ते[7]। अप्रधानचेतनानां हस्तिहरिणप्रभृतीनां[8] संग्राममृगयाद्यङ्गतया परिस्पन्दसुन्दरं स्वरूपं लक्ष्ये वर्ण्यमानतया परिदृश्यते। तस्मादेव च तथाविधस्वरूपोल्लेखप्राधान्येन[9]

---

(1) विभूषणं प्रपञ्चशोभा० and आरभते A. (2) This कारिका is missing in A, but marked by धर्मादीत्यादि instead. (3) स्ववर्णनीयतां A. (4) कथापि विषयतां A. (5) A omits all words from चतुर्वर्गसाधनो० to ०चेतनस्वरूपाः पदार्थाः. (6) चरिता A. (7) In कादम्बरी. (8) हस्तिहरि० lost in A. (9) ०न्येन lost in A.

काव्यकाव्योपकरणकवीनां[1] चित्रचित्रोपकरणचित्रकरैः साम्यं प्रथममेव प्रतिपादितम्। तदेवंविधं स्वभावप्राधान्येन रसप्राधान्येन द्विप्रकारं[2] सहज सौकुमार्यसरसं स्वरूपं[4] वर्णनाविषयवस्तुनः शरीरमेवालङ्कार्यतामेवार्हति।

तत्र स्वाभाविकं पदार्थस्वरूपमलङ्करणं यथा न भवति[5] तथा प्रथममेव[6] प्रतिपादितम्। इदानीं रसात्मनः प्रधानचेतनपरिस्पन्दवर्ण्यमानवृत्तेरलङ्कारकारान्तरा[7]भिमतामलङ्कारतां निराकरोति—

**अलङ्कारो न रसवत् परस्याप्रतिभासनात्।**
**स्वरूपादतिरिक्तस्य शब्दार्थासङ्गतेरपि[8] ॥१०॥**

अलङ्कारो न रसवत्। रसवदिति[9] योऽयमुत्पादितप्रतीतिर्नामालङ्कारस्तस्य विभूषणत्वं[10] नोपपद्यते इत्यर्थः। कस्मात् कारणात्—स्वरूपादतिरिक्तस्य परस्याप्रतिभासनात्। वर्ण्यमानस्य वस्तुनो यत् स्वरूपमात्मीयः परिस्पन्द[11]स्तस्मादतिरिक्तस्यात्यधिकस्य[12] परस्याप्रतिभासनाद्[13] अनवबोधनात्। तदिदमत्र तात्पर्यम्—यत् सर्वेषामेवालङ्कृतीनां सत्कविवाक्यानामिदमलङ्कार्यमिदमलङ्करणम् इत्यपोद्धारविहितो विविक्तभावः सर्वस्य कस्यचित् प्रमातु[14]श्चेतसि परि-

---

(1) काव्योप॰ lost in A. (2, विप्रक···A. (3) Lost in A. (4) सौकुमार्य रसस्वरूपं A. (5) यथा न भवति lost in A. (6) प्रथमे A. (7) अलङ्कारान्तर॰ instead of अलङ्कारकारान्तर in A. On the figure *rasavat*, see my *Sanskrit Poetics* pp. 244-5. (8) This कारिका is missing in A, but marked by अलङ्कार इत्यादि instead. (9) B omits all words from here up to ॰प्रतिभासनात् next (both inclusive). (10) विभूषणस्य A. (11) आत्मीयं परिस्पन्दते A. (12) अभ्यधिकस्य for अत्यधिकस्य in A. (13) प्रतिभासनात् repeated in A. (14) प्रमातृ॰ A.

स्फुरति। रसवदलङ्कारवदिति[1] वाक्ये पुनरवहितचेतसोऽपि[2] न किञ्चिदेतदेव[3] बुध्यामहे।

तथा च—यदि शृङ्गारादिरेव प्राधान्येन वर्ण्यमानोऽलङ्कार्यस्तदन्येन केनचिदलङ्करणेन भवितव्यम्। यदि वा तत्स्वरूपमेव तद्विदाह्लादनिबन्धनत्वादलङ्करणमित्युच्यते तथापि तद्व्यतिरिक्तमन्यदलङ्कार्यतया प्रकाशनीयम्। तदेवंविधो न कश्चिदपि विवेकश्चिरन्तनालङ्कारकाराभिमते[4] रसवदलङ्कारलक्षणोदाहरणमार्गे मनागपि विभाव्यते। यथा च

रसवद्दर्शितस्पष्टशृङ्गारादि[5] ॥ ३५ ॥

[इति] रसवल्लक्षणम्[6]। अत्र दर्शिताः स्पष्टाः स्पष्टं वा शृङ्गारादयो यत्रेति व्याख्याने काव्य[7]व्यतिरिक्तो न कश्चिदन्यः[8] समासार्थभूतः संलक्ष्यते। योऽसावलङ्कारः काव्यमेवेति चेत्, तदपि न सुस्पष्टसौष्ठवम्। यस्मात् काव्यैकदेशयोः शब्दार्थयोः पृथक् पृथगलङ्काराः सन्तीत्युपक्रम्येदानीं काव्यमेवालङ्करणमित्युपक्रमोपसंहारवैषम्यदुष्टत्वमायाति। यदि वा दर्शिताः स्पष्टं शृङ्गारादयो येनेति समासः, तथापि[9] वक्तव्यमेव—कोऽसाविति? प्रतिपादनवैचित्र्यमेवेति चेत्, तदपि[10] न सम्यक् समर्थनार्हम्। यस्मात् प्रतिपाद्यमानादन्यदेव तदुपशोभानिबन्धनं प्रतिपादनवैचित्र्यम्, न पुनः प्रतिपाद्यमेव[11]। स्पष्टतया दर्शितं रसानां प्रतिपादनवैचित्र्यं यद्यभिधीयते, तदपि न[12] सुप्रतिपादनम्। स्पष्टतया दर्शने शृङ्गारादीनां स्वरूपपरिनिष्पत्तिरेव

---

(1) तद्वदलङ्कारवदिति A. (2) आहित for अवहित in A. (3) किञ्चिदेव तदेव A. (4) ०भिमती B. (5) भामह iii, 6. (6) रसस्येदमितिलक्षणं A. (7) काव्यस्य B. (8) अन्यत् B. (9) तस्यापि B. (10) A omits all words from here to न पुनः. (11) प्रतिपादनस्येव A. (12) Lost in A.

पर्यवस्यति। किञ्च, रसवत: काव्यस्यालङ्कार इति तथाविधस्य सतस्तस्यासाविति न किञ्चिदनेन तस्याभिधेयं[1] स्यात्। अथवा तेनैवालङ्कारेण रसवत्त्वं तस्याधीयते, तदेवं तर्ह्यसौ न रसवतोऽलङ्कार:[2] प्रत्युत रसवानलङ्कार[3] इत्यायाति, तन्माहात्म्यात् काव्यमपि रसवत् सम्पद्यते। यदि वा तेनैवाहितरससम्बन्धस्य रसवत:[4] काव्यस्यालङ्कार इति तत्पश्चाद्रसवदलङ्कारव्यपदेशमासादयति—यथाग्निष्टोमयाज्यस्य पुत्रो भवितेत्युच्यते[5]—तदपि न सुप्रतिबद्धसमाधानम्। यस्माद् 'अग्निष्टोमयाजि'-शब्द: प्रथमं[6] भूतलक्षणे विषयान्तरे निष्प्रतिपन्नतया समासादितप्रसिद्धि: पश्चाद्[7] भविष्यति वाक्यार्थसम्बन्धलक्षणयोग्यतया तमनुभवितुं शक्नोति। न पुनरत्रैवं प्रयुज्यते। यस्माद्रसवत: काव्यस्यालङ्कार इति तत्सम्बन्धितयैवास्य[8] स्वरूपलब्धिरेव। तत्सम्बन्धिनिबन्धनञ्च काव्यस्य रसवत्त्वमित्येवमितरेतराश्रयलक्षणदोष: केनापसार्यते[9]। यदि वा रसो विद्यते यस्यासौ तद्वानलङ्कार एवास्तु इत्यभिधीयते, तथाप्यलङ्कार: काव्यं वा नान्यत् तृतीयं किञ्चिदत्रास्ति[10]। तत्पक्षद्वितयमपि प्रत्युक्तम्। उदाहरणं लक्षणैकयोगक्षेमत्वात् पृथङ् न विकल्प्यते। यथा

मृतेति प्रेत्य सङ्गन्तुं यया मे[11] मरणं स्मृतम्[12]।
सैवावन्ती मया लब्धा कथमत्रैव जन्मनि[13] ॥ ३६ ॥

---

(1) ०भिधेयं lost in A. (2) तर्हि सोदररसारूढो रसालङ्कार: A ; तर्ह्यसौ न वरसन्तोलङ्कार: ( न रसवतोऽलङ्कार: ? ) B. (3) रसचालङ्कार: B. (4) A adds सत: after this. (5) ०मयाज्यस्य पुत्रो भति० lost in A. (6) प्रथमे B. (7) ०प्रसिद्धि: पश्चा० lost in A. (8) ०ति तत्सं० lost in A. (9) केन वार्यते A. (10) अत्र omitted in B. (11) यया मे dropped in B. This श्लोक is too corrupt in A for its readings to be of any use. (12) मतम् in दण्डी. (13) दण्डी's काव्यादर्श ii, 280

अत्र रतिपरिपोषलक्षणवर्णनीयशरीरभूतायाश्चित्तवृत्तेरतिरिक्तमन्यद्विभक्तं वस्तु न किञ्चिद्विभाव्यते। तस्मादलङ्कार्यतैव[1] युक्तिमती। यदपि कैश्चित्

स्वशब्दस्थायिसञ्चारिविभावाभिनयास्पदम्[2] ॥ २७ ॥

इत्यनेन पूर्वमेव लक्षणं विशेषितम्, तत्र स्वशब्दास्पदत्वं रसानामपरिगतपूर्वमस्माकम्। ततस्त एव रससर्वस्वसमाहितचेतसस्तत्परमार्थविदो विद्वांसः परं[3] प्रष्टव्याः-- किं स्वशब्दास्पदत्वं[4] रसानामुत रसवत इति[5]। तत्र पूर्वस्मिन् पक्षे—रस्यन्त इति रसास्ते स्वशब्दास्पदास्तेषु तिष्ठन्तः शृङ्गारादिषु वर्तमानाः सन्तस्तज्ज्ञैरास्वाद्यन्ते। तदिदमुक्तं भवति—यत् स्वशब्दैरभिधीयमानाः श्रुतिपथमवतरन्तश्चेतनानां चर्वणचमत्कारं[6] कुर्वन्तीत्यनेन न्यायेन घृतपूरप्रभृतयः पदार्थाः स्वशब्दैरभिधीयमानास्तदास्वादसम्पदं सम्पादयन्तीत्येवं सर्वस्य कस्यचिदुपभोगसुखार्थिनस्तैरुदारचरितैरयत्नेनैव[7] तदभिधानमात्रादेव त्रैलोक्यराज्यसम्पत्सौख्यसमृद्धिः प्रतिपाद्यते[8] इति नमस्तेभ्यः।

रसवतस्तदास्पदत्वं नोपपद्यते, रसस्यैव स्ववाच्यस्यापि[9] तदास्पदत्वाभावात्। किमुतान्यस्येति। तदलङ्कारत्वं[10] च प्रथममेव प्रतिषिद्धम्। शिष्टं स्थाय्यादिलक्षणं पूर्वं व्याख्यातमेवेति[11] न पुनः पर्यालोच्यते। यदपि[12]

रसवद्रससंश्रयात् ॥ ३८ ॥

---

(1) तस्मादार्यकार्यतैव B. (2) उद्भट iv, 3. (3) एव A. (4) B omits स्व. (5) उत्तरव (corrupt) in A for उत रसवत. (6) B repeats चर्वण० ; A has चेतचर्वण०. (7) ०चरितैरयं तेनैव A. (8) प्रतिपादिता. (9) स्वभाववाच्यस्यापि A. (10) अलङ्कारत्वं only in B. (11) स्थाय्यादिपूर्वलक्षणव्याख्यानमेवेति A. (12) B has dropped all words after this up to the beginning of रससंश्रयः next (p. 160, l. 2).

इति कैश्चिल्लक्षणमकारि तदपि न सम्यक् समाधीयतामतितिष्ठति। तथा हि—रसः संश्रयो यस्यासौ रससंश्रयः, तस्मात् कारणादयं रसवदलङ्कारः सम्पद्यते। तथापि वक्तव्यमेव—कोऽसौ रसव्यतिरिक्तवृत्तिः पदार्थः। काव्यमेवेति चेत् तदपि पूर्वमेव प्रत्युक्तम्, तस्य स्वात्मनि क्रियाविरोधादलङ्कारत्वानुपपत्तेः। अथवा रसस्य[1] संश्रयो रसेन संश्रियते यस्तस्माद्[2] रससंश्रयादिति। तथापि कोऽसाविति व्यतिरिक्तत्वेन व्यक्तव्यतामेवा(याति)। उदाहरणजातमप्यस्य लक्षणस्य पूर्वेण समानयोगक्षेमप्रायमिति [न] पृथक् पर्यालोच्यते।

रसपेशलम्[3] ॥ २९ ॥

इति पाठे न किञ्चिदत्रातिरिच्यते। अथ............ प्रतिपादकवाक्योपारूढपदार्थसार्थस्वरूपमलङ्कार्यं रसस्वरूपानुप्रवेशेन विगलितस्वपरिस्पन्दानां द्रव्यानाम् इव[4]......कथमलङ्करणं भवतीत्येतदपि चिन्त्यमेव। किञ्च तथाभ्युपगमेऽपि[5] प्रधानगुणभावविपर्यासः पर्यवस्यतीति न किञ्चिदेतत्।

अत्रैव......(उ)पक्रमते—शब्दार्थसङ्गतेरपि[6]। शब्दार्थयोरभिधानाभिधेययोरसमन्वयाच्च रसवदलङ्कारोपपत्तिर्नास्ति। अत्र[7] च रसो विद्यते (तिष्ठ)ति यस्येति मत्प्रत्ययविहिते तस्यालङ्कार इति षष्ठीसमासः क्रियते। रसवांश्चासावलङ्कारश्चेति विशेषणसमासो वा। तत्र पूर्वस्मिन् पक्षे—र(सव्यतिरिक्तम)न्यत् पदार्थान्तरं विद्यते यस्यासावलङ्कारः। काव्यमेवेति चेत्, तत्रापि तद्व्यतिरिक्तः कोऽसौ पदार्थो यत्र रसवदलङ्कारव्यपदेशः सावकाशतां[8] प्रतिपद्यते? विशेषातिरिक्तः

(1) रूपस्य A. (2) Here B Ms. ends; the rest of the text follows A alone. It is given here to complete the topic under discussion. (3) दण्डी ii, 275. (4) A reads द्रव्यानां इवासः सम्पा··, which is evidently corrupt. (5) किं लमाद्यभ्युपगमेऽपि A. (6) A is corrupt here and reads शब्दार्थसङ्गतेरसमरपि. (7) तेषां A. (8) सावकांशतां A.

पदार्थो न कश्चित् परिदृश्यते यस्तद्वानलङ्कार इति व्यवस्थितिमासादयति। तदेवमुक्तलक्षणे मार्गे[1] रसवदलङ्कारस्य शब्दार्थसङ्गतिर्न कदाचिदस्ति।

यदि वा निदर्शनान्तरविषयतया समासद्वितयेऽपि शब्दार्थसङ्गतियोजना विधीयते, यथा

तन्वी मेघजलार्द्रपल्लवतया[2] धौताधरेवाश्रुभिः
शून्येवाभरणैः स्वकालविरहाद् विश्रान्तपुष्पोद्गमा।
चिन्तामौनमिवास्थिता मधुलितां शब्दैर्विना लक्ष्यते
चण्डी मामवधूय पादपतितं जातानुतापेव सा[3] ॥ ४० ॥

यथा वा

तरङ्गभ्रूभङ्गा (क्षुभित)विहगश्रेणिरशना
विकर्षन्ती फेनं वसनमिव संरम्भशिथिलम्।
यथाविद्धं याति स्खलितमभिसन्धाय बहुशो
नदीभावेनेयं ध्रुवमसहना सा परिणता[4] ॥ ४१ ॥

अत्र रसत्वमलङ्कारस्य प्रकटं प्रतिभासेते। तस्मान्न कथञ्चिदपि तद्विवेकस्य दुरवधानता। तेन रसवतोऽलङ्कार इति षष्ठीसमासपक्षे शब्दार्थयोर्न किञ्चिदसङ्गतत्वम्, रसपरिपोषपरत्वादलङ्कारस्य तन्निबन्धनमेव रसवत्त्वम्[5]। रसवांश्चासावलङ्कारश्चेति विशेषणसमासपक्षे .........[6]। तथा चैतयोरुदाहरणयोर्लतायाः सरितश्चोद्दीपनविभावत्वेन वल्लभाभावितान्तःकरणतया नायकस्य तन्मयत्वेन ( निश्चेतन ? )-मेव पदार्थजातं सकलमवलोकयतः[7] तत्साम्यसमारोपणं तद्धर्माध्या-

---

(1) ०लक्षणे मार्गे A. (2) वल्कलतया A. (3) विक्रमोर्वशीय iv, 38 = ध्वन्यालोक p. 76 (anon). (4) विक्रमोर्वशीय iv, 28 = ध्वन्यालोक p. 76 (anon). (5) रसवत्त्वमेव A. (6) A is corrupt here and reads ०पक्षे यदिनकृर्ध्वयीरेव. (7) ०लोकयतं A.

रोपणं[1] चेत्युपमारूपककाव्यालङ्कारयोजनं विना न केनचित् प्रकारेण घटते, तल्लक्षणवाक्यत्वात्[2]। सत्यमेतत्, किन्तु 'अलङ्कार'-शब्दाभिधानं विना विशेषणसमा[सप]क्षे केवलस्य[3] रसवानिति [अस्य] प्रयोगः प्राप्नोति। रसवानलङ्कार[4] इति चेत् प्रतीतिरभ्युपगम्यते तदपि युक्ति-(युक्ततां नार्हति)......देरभावात्। रसवतोऽलङ्कार[5] इति षष्ठी-समासपक्षोऽपि न सुस्पष्टसमन्वयः। यस्य कस्यचित् काव्यत्वं रस-वत्त्वमेव। यस्यातिशयत्वनिबन्धनं तथाविधं[6] तद्विदाह्लादकारि काव्यं करणीयमिति तस्यालङ्कार इत्याश्रिते सर्वेषामेव रूपकादीनां रसवदल-ङ्कारत्वमेव न्यायोपपन्नतां प्रतिपद्यते। अलङ्का[रस्य य]स्य कस्य-चिद्रसत्वाद् विशेषणसमासेऽप्येषैव वार्त्ता[7]।

किञ्च, तदभ्युपगमे प्रत्येकमुत्स्खलितलक्षणोल्लेखवि......कृतपर-पोषतया[8] लब्धात्मनामलङ्काराणां प्रातिस्विकलक्षणाभिहितातिशय-व्यतिरिक्तमनेन किञ्चिदाधिक्यमाख्यायते। तस्मात्तल्ल(क्षण)करण-वैचित्र्यं प्रतिवारितप्रसरमेव परापतति। न चैवंविधविषये[9] रसवदल-ङ्कारव्यवहारः सावकाशः, तज्ज्ञैस्तथावगमात्, अलङ्काराणां च मुख्यतया व्यवस्थानात्।

अथवा, चेतनपदार्थगोचरतया रसवदलङ्कारस्य निश्चेतनवस्तुविषय-त्वेन चोपमादीनां विषयविभागो व्यवस्थाप्यते, तदपि न विद्वज्जना-वर्जनं विदधाति। यस्मादचेतनानामपि रसोद्दीपनसामर्थ्यसमुचित-सत्कविसमुल्लिखितसौकुमार्यसरसत्वादुपमादीनां प्रविरलविषयता नि-

---

(1) तद्वाप्यारोपणं A. (2) ०वाक्याद्वा A. (3) A reads...चकेवलस्य. (4) रसवदलङ्कार A. (5) रसवदलङ्कार A. (6) तथाविधं त्वे A. (7) A is corrupt here and reads ०समासेऽप्येषा वार्त्ता कस्यचेव वार्त्ता. (8) The Ms A marks a *lacuna* after वि. (9) विधिविषये A.

विषयत्वं वा स्यादिति शृङ्गारादिनिस्यन्दसुन्दरस्य सत्कविप्रवाहस्य च नीरसत्वं प्रसज्यत इति प्रतिपादितमेव पूर्वसूरिभिः[1]। यदि वा वैचित्र्यान्तरमनोहारितया रसवदलङ्कारः प्रतिपाद्यते, यथाभियुक्तैस्तैरेवाभ्यधायि—

प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः[2] ॥ ४२ ॥

इति। यत्रान्यो वाक्यार्थः प्राधान्यादलङ्कार्यतया व्यवस्थितस्तस्मिन् तदङ्गतया विनिबध्यमानः शृङ्गारादिरलङ्कारतां प्रतिपद्यते। यस्माद् गुणप्राधान्यं[3] भावाभिव्यक्तिपूर्वमेवंविधविषये विभूष्यते। भूषणविवेकव्यक्तिरुज्जृम्भते, यथा

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः[4] ॥४३॥

न च शब्दवाच्यत्वं नाम समानं कामिशराग्नितेजसोः[5] सम्भवतीति न तावतैव तयोस्तथाविधविरुद्धधर्माध्यासादि विरुद्धस्वभावयोरैक्यं कथञ्चिदपि व्यवस्थापयितुं पार्यते, परमेश्वरप्रयत्नेऽपि स्वभावस्यान्यथाकर्तुमशक्यत्वात्। न च तथाविधशब्दवाच्यतामात्रादेव तद्विदां तदनुभवप्रतीतिरस्ति। 'गुडखण्ड'-शब्दाभिधानादपि प्रतिविषादेस्तदास्वादप्रसङ्गात् तदनुभवप्रतीतौ सत्यां रसद्वय[6]समावेशदोषोऽप्यनिवार्यतामाचरति। यदि वा भगवत्प्रभावस्य मुख्यत्वे द्वयोरप्येतयोरङ्गत्वाद्

---

(1) See ध्वन्यालोक pp. 75-76. (2) ध्वन्यालोक ii, 5. (3) गुणप्रधानं A. (4) A part of the last line of this verse, which is discussed in ध्वन्यालोक in this connection as an example of the ऊर्जस्वि variety of रसवदलङ्कार (p. 73), is already quoted before p. 38, which see for references. (5) The Ms A is corrupt here and reads निमित्तरणितेजसोः. (6) पुरुषद्वय A.

भूषणत्वमित्युच्यते[1] तदपि [न] स(मीचीनम्)। यस्मात् कारणस्य वास्तवत्वादिरेव स्यात्। निर्मूलत्वादेव तयोर्भावाभावयोरिव न कथञ्चिदपि साम्योपपत्तिरित्यलमनु[2]चि(तविषय)चर्वणचातुर्यचापलेन।

यदि वा निदर्शनेऽस्मिन्ननाश्वसतः समाम्नातलक्षणोदाहरणसङ्गतिं सम्यक् समीहमानाः समर्थणा[3] उदाहरणान्तरवि(न्यासं ? रसव)दलङ्कारस्य व्याचख्युः, यथा

किं हास्येन मे प्रयास्यसि पुनः प्राप्तश्चिराद्दर्शनं
केयं निष्करुण[4] प्रवासरुचिता केनासि दूरीकृतः।
स्वप्नान्तेष्विति[5] (ते वदन् प्रियतम)व्यासक्तकण्ठग्रहो[6]
बुद्ध्वा (रोदि)ति रिक्तबाहुवलयस्तारं रिपुस्त्रीजनः:[7] ॥४४॥

अत्र भ[ग]वद्दिनिहतवल्लभो वैरिविलासिनीसमूहः शोकावेशाद[शर]णः करुणरसकाष्ठाधिरूढिविहितमेवंविधवैशसमनुभवतीति तात्पर्यप्राधान्ये वाक्यार्थस्तदङ्गतया विनिबध्यमानः। प्रवासविप्रलम्भशृङ्गार(प्रतिभासन ?)परत्वमत्र परमार्थः परस्परान्वितपदार्थसार्थसमर्प्यमाणवृत्तिर्गुणभावेनावभासनादलङ्करणमित्युच्यते। तस्य च निर्विषयत्वाभावाद् रसवदालम्बनविभावादिस्वकारणसामग्रीविरहविहिता लक्षणानुपपत्तिर्न सम्भवति। रसद्वयसमावेशदुष्टत्वमपि दूरमपास्तमेव। द्वयोरपि वास्तवस्वरूपस्य[8] विद्यमानत्वात्तदनुभवप्रतीतौ सत्यां नात्मविरोधः[9], स्पर्धित्वाभावात्। तेन तदपि तद्विदाह्लादविधानसामर्थ्यसुन्दरम्, करुणरसस्य निश्चायकप्रमाणाभावात्। प्रवासविप्रलम्भस्य स्वकारणभूतवाक्योपारूढालम्बनविभावादिसमर्प्यमाणत्वं स्वप्नान्तरसमये च

(1) A is corrupt and reads भूषणत्वमित्युच्यते. (2) ०रित्येवम० A. (3) A appears to be corrupt here and reads समर्थाणामुदाहरण०. (4) निष्कुरुण A. (5) ०न्तेष्विव A. (6) ०प्यासक्त० A. (7) Quoted and discussed as an example of the शुद्ध variety of रसवदलङ्कार in ध्वन्यालोक p. 72. (8) वास्तवस्य स्वरूपस्य A. (9) सत्यात्मविरोधः A.

तथाविधत्वं युक्त्या सम्भवतस्तस्योभयमुपपन्नमिति प्रथमनरमेव कथमसौ समुद्भवतीति चे[त्त]दपि न समञ्जसप्रायम्। यस्माच्चाटु-विषयमहापुरुषप्रतापाक्रान्तिचकितचेतसामितस्ततः स्ववैरिणां तत्प्रेय-सीनाञ्च प्रकाशनैरपि (?) पृथगवस्थानं न युक्तिप्रयुक्ततामतिवर्तते। ......स्तमेव तदपि चतुरस्रम्। करुणरसस्य सत्यपि निश्चये, तथा-विधपरिपोषदशाधाराधिरूढैकाग्रतास्तिमितमानसस्य तथाभ्यस्त[1]-रसवासनाधिवासितचेतसः[2] सुचिरात्समासादि[त]स्वप्नसमागमः पूर्वानु-भूतवृत्तान्तसमुचितसमारब्धकान्तसंलापः कथमपि सम्प्रबुद्धः। प्रबोध-समनन्तर[3]समुल्लसितपूर्वपरानुसन्धानविहितप्रस्तुतवस्तुविसंवादविदारि-तान्तःकरणो भवद्वैरिविलासिनीसार्थो रोदितीति करुणस्यैव परिपोष-पदवीमधिरोहः। तथाविधव्यभिचार्यौचित्यचारुत्वं तत्स्वरूपानुप्रवेशो वेति कुतः प्रवासविप्रलम्भस्य पृथग्व्यापारे रसगन्धोऽपि[4]। यदि वा प्रेयसः[5] प्राधान्ये तदङ्गत्वात् करुण[6]रसस्यालङ्करणत्वमित्यभिधीयते तदपि न[7] निरवद्यम्। यस्माद् द्वयोऽरप्येतयो[8]रुदाहरणयोर्मुख्यभूतो वाक्यार्थः करुणात्मनैव विवर्तमानवृत्तिरुपनिबद्धः। पर्यायोक्तान्याप-देशन्यायेन[9] वाच्यताव्यतिरिक्तयोः प्रतीयमानतया न करुणस्य रसत्वाद् व्यङ्ग्यस्य सतो वाच्यत्वमुपपन्नम्। नापि गुणीभूतव्यङ्ग्यस्य विषयः, व्य[ङ्ग्यस्य क]रुणात्मनैव प्रतिभासनात्। न च द्वयोरपि व्यङ्ग्यत्वम्, अङ्गाङ्गिभावस्यानुपपत्तेः। एतच्च[10] यथासम्भवमस्माभिर्विकल्पितम्। न पुनस्तन्मात्र.........ण।

(1) स्तिमितमानस्सुततताभ्यस्त॰ A. (2) ॰व्यसनादिवासित॰ A. (3) समानतर A. (4) दशगन्धोऽपि A. (5) That is, the प्रेयस् अलङ्कार. (6) तदङ्गत्वादप A. (7) A is corrupt and reads तदोपता. (8) ॰तदोपता for प्येतयो: A. (9) पर्यायोक्तान्यापदेशन्ययेन A. (10) एतच्च A.

किञ्च, 'काव्ये तस्मिन्नलङ्कारो रसादिः[1]' इति रस एवालङ्कारः केवलः, न तु रसवदिति मत्प्रत्ययस्य जीवितम् न किञ्चिदभिहितं स्यात्। एवं सति ग्रन्थार्थ........दनस्यैव तिष्ठतीत्येतदपि न किञ्चित्।

[ असमाप्तोऽयमुन्मेषः ग्रन्थश्च ][2]

---

(1) Quoted from the ध्वन्यालोक see above p. 163. (2) A résumé of the rest of the work, of which the Ms material available to me is inadequate to permit of a critical edition, is given below.

# A Résumé of the Contents of the Unedited Portion of the Text, with extracts.[1]

## Unmesa III.

The figure *preyas*

After discussing the figure *rasavat*, Kuntaka goes on to deal with the figure *preyas*[2], closely connected with *rasavat*, criticising in this connexion Bhāmaha's view of the matter. He refers to Daṇḍin's definition ( ii, 275 ) प्रेय: प्रियतराख्यानम्, and remarks that Bhāmaha (iii, 5) does not define the figure, but thinks that the illustration given would suffice ( उदाहरणमात्रमेव लक्षणं मन्यमान: ). Daṇḍin quotes the same illustration with approval, adding another line (which makes the sentence complete and the figure clear) : कालेनैषा

(1) This résumé, as we have already noted, is based upon one Ms only, viz. the hopelessly corrupt Devanagari transcript of the Madras Ms. These portions are entirely wanting in the Jesalmer Ms. With this imperfect material it is not possible to edit this part of the text properly ; but as no further Mss of the text are likely to be discovered, a résumé, however defecient, is attempted. I have, however, tried to give it in the author's own words as far as possible, presenting full extracts wherever the text is intelligible and capable of being reconstructed. The emendations, which had to be numerous on account of the corrupt nature of the Ms, are mostly conjectural and capable of improvement : while the restoration of the missing Kārikās cannot be taken as final. The result obtained cannot be said to be very satisfactory, but I have spared no pains to present this part of the text, as for as it can be presented. (2) The Kārikā on the this point is lost and cannot be reconstructed from the commentary.

भवेत् प्रीतिस्तवैवागमनात् पुनः, so that the whole verse, which is cited by Kuntaka, stands thus :

प्रेयो गृहा(गतं कृष्णमवादीद्) विदुरो यथा ।
अद्य या मम गोविन्द जाता त्वयि गृहागते ।
कालेनैषा भवेत् प्रीतिस्तवैवागमनात् पुनः ॥

(Daṇḍin ii, 276)

But Kuntaka criticises : तदेवं न चोदक्षमतामर्हति । तथा च, कालेनेत्युच्यते तदेव वर्त्तमानविषयतया वस्तुनः स्वभावः (?)[1], तदेव लक्षणकरणमित्यलङ्कार्यं न किञ्चिदवशिष्यते । तस्यैवोभयमलङ्कार्यमलङ्करणत्वं चेत्ययुक्तियुक्तम् । एकक्रियाविषयं युगपदेकस्यैव वस्तुनः कर्मकरणत्वं नोपपद्यते । यदि दृश्यते तथाविधानि वाक्यानि येषामुभयमपि सम्भवति—

आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना ।
आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे ॥ (कुमार० २।१०)

इत्यभिधीयते, तदपि निःसमन्वयप्रायमेव । यस्मादत्र वास्तवेऽप्यभेदे काल्पनिकमुपचारसत्तानिबन्धनं विभागमाश्रित्य तद्व्यवहारः प्रवर्तते । किञ्च, विश्वमयत्वात् परमेश्वरस्य परमेश्वरमयत्वाद्वा विश्वस्य पारमार्थिकेऽप्यभेदे माहात्म्यप्रतिपादनार्थं प्रातिस्विकपरिस्पन्दविचित्रां जगत्प्रपञ्चरचनां प्रति सकलप्रमातृतास्वसंवेद्यमानो भेदावबोधः स्फुटावकाशतां न कदाचिदप्यतिक्रामति । तस्मादत्र परमेश्वरस्यैव रूपस्य कस्यचित्तदाप्यमानत्वाद्वेदनादेः क्रियायाः कर्मत्वम्, कस्यचित्साधकतमत्वात् करणत्वमति ........। उदाहरणे पुनरपोद्धारबुद्धिरिति[2] कल्पनयापि न कथञ्चिदपि विभागो विभाव्यते । तस्मात्

स्वरूपादतिरिक्तस्य परस्याप्रतिभासनात्[3] ।

---

(1) Ms. स्वरित. (2) अपि for इति in Ms. (3) See above p. 156 (iii, 10).

इति दूषणमत्रापि सम्बन्धनीयम् ।……पक्षे च यदेवालङ्कार्यं[1] तदेवालङ्करणमिति प्रेयसो रसवतश्च स्वात्मनि क्रियाविरोधात्

आत्मैव नात्मनः[2] स्कन्धं क्वचिदप्यधिरोहति[3] ।

इति स्थितमेव ।

After discussing another objection to the view that *preyas* is an *alaṃkāra*[4], Kuntaka points out that such cases cannot be regarded as instances of *saṃsṛṣṭi* and *saṅkara*. He cites the illustration

इन्दोर्लक्ष्म त्रिपुरजयिनः कण्ठमूलं मुरारि[5]-
र्दिङ्नागानां मदजल[6]मसीभाञ्जि गण्डस्थलानि ।
अद्याप्युर्वीवलयतिलक श्यामलिम्नानु(लिप्ता)-
(न्या)भासन्ते वद धवलितं किं यशोभिस्त्वदीयैः[7] ॥

and remarks : अत्र प्रेयोऽभिहितिरलङ्कार्या, व्याजस्तुतिरलङ्करणम् । न पुनरुभयोरलङ्कारप्रतिभासो येन तद्व्यपदेशः सङ्करव्यपदेशो व्यावर्तते, तृतीयस्यालङ्कार्यतया वस्त्वन्तरस्याप्रतिभासनात् । He sums up the discussion by saying : अन्यस्मिन् विषये प्रायो भणितिविविक्ते वर्णनीयान्तरे प्रेयसो विभूषणत्वादुपमादेरिवोपनिबन्धः प्राप्नोति [इति] न क्वचिदपि दृश्यते । तस्मादन्यत्रान्यदापि प्रेयसो न युक्तियुक्तमलङ्करणत्वम् । रसवतोऽपि तदेव, योगक्षेमत्वात् ।

(1) तदेव for यदेव in Ms. (2) Ms. आत्मनैवात्मनः. (3) See text, Kārikā i, 13. (4) The passage is too corrupt and fragmentary. The Kārikā appears to be explained in part here. But as the verse is lost in the text, it is difficult to reconstruct it from the commentary. (5) The line is corrupt in Ms and reads इदोकण्ठनलं मुरारि. (6) ०मल for जल in Ms. (7) The verse is attributed to राजशेखर in सुभाषितावली 2563 = anon. in Ruyyaka p. 113.

The figure *ūrjasvin*

Then he goes to deal with the figures ऊर्जस्वि and उदात्त in the same manner. The Kārikā on this is given in the text in a somewhat corrupt form, but may be reconstructed thus :

एवमलङ्करणतां प्रेयसः प्रत्यादिश्य वर्णनीयशरीरत्वात्तदेकरूपाणामन्येषां प्रत्यादिशति—

ऊर्जस्व्युदात्ताभिधान[1]पौर्वापर्यप्रणीतयोः[2] ।
अलङ्करणयोर्भूषणत्वं ( तद्वन्न विद्यते ) ॥

न विद्यते[3] न सम्भवति ॥ कथम्—तद्वत् । तदित्यिनन्तरोक्तरसवदादिपरामर्शः ।............[4] रसवदादिवदेव तयोर्विभूषणत्वं नास्ति ।

Then he criticises the definitions and examples of *ūrjasvin* given by Udbhaṭa and Bhāmaha, quoting Udbhaṭa iv, 5 ( अनौचित्यप्रवृत्तानां ) and 6 ( तस्याः कामोऽस्य ववृधे and Bhāmaha iii, 7, with the remark that the latter considers the illustration to be enough for indicating the nature of the figure in question ( कैश्चिदुदाहरणमेव व्यक्तत्वाल्लक्षणं मन्यमानैस्तदेव प्रदर्शितम् ). He cites another illustration :

अपहर्ताहमस्मीति हृदि ते मास्म भूद्भयम् ।
विमुखेषु न मे खड्गः प्रहर्तुं जातु वाञ्छति ॥

Taking Udbhaṭa's definition, he points out that if

(1) ०भिधानयोः Ms, contrary to metre. (2) As we find them treated in भामह iii, 7 and 10. (3) Ms. तद्विद्यते. (4) The passage is hopelessly corrupt.

the *bhāva* is अनौचित्यप्रवृत्त, there would be a breach of *rasa* (रसभङ्ग) in accordance with the dictum अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्[1] : but in such illustrations as are cited समुचितोऽपि रसः परमसौन्दर्यमावहति, तत्र कथमनौचित्यपरिम्लानः कामादिकारणकल्पनोपसंहृतवृत्ति[2]रलङ्कारता(प्रति)-भासः प्रयास्यति. He quotes *Kumāra*. vi, 95 ( पशुपतिरपि तान्यहानि ) and maintains against भरतनयनिपुणमानस's that the *rāsābhāsa* here is *alamkāra* (उदाहरणमेवोर्जितम्। तदेवमयं प्रधानचेतनलक्षणोपकृतातिशयविशिष्टचित्तवृत्तिविशेषवस्तुस्वभाव एव मुख्यतया वर्ण्यमानत्वादलङ्कार्यो न पुनरलङ्कारः ), on grounds similar to those he has already expounded in the case of *rasavat* etc. ( रसवदाद्यभिहितदूषणपात्रतामतिक्रामति. तदेतदुक्तरूप योजनीयम् ), Regarding *udātta*, he

The figure *udātta* advances similar arguments against its being considered as an *alamkāra* : एवमुदात्तस्योभयप्रकारस्याप्यलङ्कार्यतैव युक्तिमती, न पुनरलङ्करणत्वम्, and goes on to consider its two varieties in detail. Criticising Udbhaṭa's definition of the first variety *viz*., उदात्तमृद्धिमद्वस्तु, he says : अत्र यद्वस्तु तदुदात्तम्, अलङ्करणं कीदृशमित्याकाङ्क्षायाम् 'ऋद्धिमत्' इत्यनेन यदि विशिष्यते, तत्तदेव सम्पदुपेतं वस्तु वर्ण्यमा[नमलङ्का]र्यं तदेवालङ्करणमिति स्वात्मनि क्रियाविरोधलक्षणस्य दोषस्य दुर्निवारत्वात् स्वरूपातिरिक्तस्य वस्त्वन्तरस्याप्रतिभासनादुर्जस्विवत्।......अथवा ऋद्धिमद्वस्तु यस्मिन्

---

(1) Quoted from ध्वन्यालोक p. 145. (2) उद्भट's definition is : अनौचित्यप्रवृत्तानां कामक्रोधादिकारणात्। भावानां च रसानां च बन्ध ऊर्जस्वि कथ्यते ॥

यस्येत्यपि व्याख्यानं क्रियते, तथापि तदन्यपदार्थलक्षणं वस्तु व्यक्तव्यमेव यत्समानार्थतामुपनीतम्[1]। तद्वद्वि[2]मद्वस्तु यस्मिन् यस्य वेति तत्काव्यमेव तथाविधं भविष्यतीति चेत्, तदपि न किञ्चिदेव। यस्मात्काव्यस्यालङ्कार इति प्रसिद्धिः, न पुनः काव्यमेवालङ्करणमिति। यदि वा ऋद्धिमद्वस्तु यस्मिन् यस्य वेत्यसावलङ्कारः......तथापि वर्णनीयालङ्करणमतिरिक्तमलङ्करणकल्पमन्यदत्र [किं]चिदेवोपलभ्यत इत्युभयथापि शब्दार्थसङ्गतिलक्षणदोषः सम्प्राप्तावसरः[3] सम्पद्यते। Regarding its second variety as given by Udbhaṭa, he goes on to remark : द्वितीयस्याप्युदात्तप्रकारस्यालङ्कार्यत्वमेवोपपन्नम्, न पुनरलङ्कारभावः। तया चैतस्य लक्षणं

चरितं च महात्मनाम्।

उपलक्षणतां प्राप्तं नेतिवृत्तत्वमागतम्॥ (Udbhaṭa iv, 8)

इति। तत्र वाक्यार्थपरमार्थविद्भिरेवं पर्यालोच्यताम्—यन्महा(नु)भावानां व्यवहारस्योपलक्षणमात्रवृत्तेरन्वयः प्रस्तुते वाक्यार्थे कश्चिद्विद्यते वा न वेति। तत्र पूर्वस्मिन् पक्षे—तत्र तदलीनत्वात् पृथगभिधेयस्यापि पदार्थान्तरवत्तदवयवत्वेनैव व्यपदेशो न्याय्यः, पाण्यादेरिव शरीरे। न पुनरलङ्कारभावोऽपीति। अन्यस्मिन् पक्षे—तदन्वयाभावादेव वाक्यान्तरवर्तिपदार्थवत्तस्य तत्र सत्तैव न सम्भवति, किं पुनरलङ्करणत्वचर्चा। In this connexion he cites an illustrative verse, which is too corrupt and fragmentary in the Ms. to be properly restored.

The figure *samāhita*

Then he goes on to the figure *samāhita*, which he deals with in the same way, declaring : एवं समाहितस्याप्यलङ्कार्यत्वमेव न्याय्यम्, न पुन-

(1) ०मुपमानीत Ms. (2) तन्नद्धि० Ms. (3) संप्राप्तोऽवसरः Ms.

रलङ्कारभावः. The Kārikā on this point ( as far as it can be reconstructed from the *vrtti* is

तथा समाहितस्यापि प्रकारद्वयशोभिनः ।

( to be construed with the Kārikā, given above, on ऊर्जस्विन् and उदात्त ). The Kārikā is explained thus : तथा तेनैव पूर्वोक्तेन प्रकारेण समाहिताभिधानस्य चालङ्कारस्य भूषणत्वं न विद्यते नास्तीत्यर्थः । Then he criticises Udbhaṭa's definition (iv, 7) of the figure, which, according to Kuntaka, constitutes the first variety referred to in the Kārikā. The verse of Ubdhaṭa however, is quoted with a reading slightly different from that of the printed texts :

रसभावतदाभासतत्प्रशान्त्यादिरक्रमः[1] ।
अन्यानुभावनिःशून्यरूपो यस्तत् समाहितम् ॥

Then he criticises its second variety, as defined by Daṇḍin (ii, 298-99), whose definition and illustration are both quoted, in connexion with the explanation of the above Kārikā : यदपि कैश्चित् प्रकारान्तरेण समाहिताख्यमलङ्करणमाख्यातं तस्यापि तथैव भूषणत्वं न विद्यते ।

---

(1) Ms. प्रशान्तोनिरक्रमः, which is corrected from Mammaṭa (p.84) who makes use of this line. The Nir. Sag. Ed. reads ०तदाभासवृत्तेः प्रशमबन्धनम, with which the reading of the Bombay Sansk. Ser. ed. agrees ( with the exception of reading ०वृत्तिः for वृत्तेः ). Jacob's text in *JRAS*, 1837, p. 840 agrees with Nir. Sag. ed. reading. In the next line, of course, all these texts read ०रूपं, यत्तत्.

तदभिधत्ते—प्रकारद्वयशोभिनः। पूर्वोक्तेन प्रकारेणानेन चापरेणेति द्वाभ्यां शोभमानस्य समाह्वितस्यालङ्कारत्वं न सम्भवति। Of the first variety, the following illustrative verse is discussed :

अक्ष्णोः स्फुटाश्रु[1] कलुषोऽरुणिमाविलीनः
शान्तं च साधमधरस्फुरणं भ्रुकुट्या।
भावान्तरस्य (तव) गच्छगतोऽपि कोपो
नोद्गाढवासनतया प्रसरं ददाति ॥[2]

After this, Kuntaka proceeds to explain his own idea of *rasavat*, with some preliminary remarks : तदेवं चेतनाचेतनपदार्थभेदभिन्नं स्वाभाविकसौकुमार्यमनोहरं (व)स्तुनः स्वरूपं प्रतिपादितम्। इदानीं तदेव कविप्रतिभोल्लिखतलोकोत्तरातिशयशालितया नवनिर्मितं मनोज्ञतामुपनीयमानमालोच्यते। तथाविधभूषणविन्यासविहितसौन्दर्यातिशयव्यतिरेकेण भूतत्वनिमित्तभूतं न तद्विदाह्लादकारितायाः कारणम्. Here he quotes two *antara-ślokas* and explains a Kārikā (beginning अभिधायाः प्रकारौ स्वः), which are partially lost and corrupt in the Ms. Then comes the Kārikā on *rasavat*, which is missing in the text, but may be reconstructed as follows from the *vṛtti* :

Kuntaka's own idea of *rasavat*

यथा स रसवन्नाम सर्वालङ्कारजीवितम्।
काव्यैकसारतां याति तथेदानीं विविच्यते ॥

---

(1) अच्णो स्फुटास्तु. (2) This verse is quoted anonynously in Ruyyaka p. 189.

रसेन वर्तते तुल्यं रसवत्त्वविधानतः ।
योऽलङ्कारः स रसवत् तद्विदाह्लादनिर्मितेः ॥

The *Vrtti* on these verses runs thus : यथेत्यादि । यथा स रसवन्नाम यथा येन प्रकारेण पूर्वप्रत्याख्यातवृत्तिरलङ्कारो रसवदभिधान(:) काव्यैकसारतां याति (काव्यै)कसर्वस्वतां प्रतिपद्यते, सर्वालङ्कारजीवितं सर्वेषामलङ्काराणामुपमादीनां जीवितं स्फुटीभूतं (!) सम्पद्यते, तथा तेन प्रकारेणेदानीमधुना विविच्यते विचार्यते लक्षणोदाहरणभेदेन वितन्यते । तमेव रसवदलङ्कारं लक्षयति—रसेनेत्यादि । 'योऽलङ्कारः स रसवत्' इत्यन्वयः[1] । यः किल एवंस्वरूपो रूपकादिः रसवदभिधीयते । किंस्वभावेन—रसेन वर्तते तुल्यम्[2] । रसेन शृङ्गारादिना तुल्यं[2] वर्तते, यथा ब्राह्मणवत् क्षत्रियस्तथैव । स रसवदलङ्कारः । कस्मात्[3]—रसवत्त्वविधानतः । रसोऽस्यास्तीति रसवत् काव्यम्, तस्य भावस्तत्त्वम् ततः, सरसत्वसम्पादनात् । तद्विदाह्लादनिर्मितेश्च । तत् काव्यं विदन्तीति तद्विदः, तज्ज्ञास्तेषामाह्लादनिर्मितेरानन्दनिष्पादनात् । तथा रसः काव्यस्य रसवत्तां तद्विदाह्लादं च विदधाति । एवमुपमादिरप्युभयं निष्पादयन् भिन्नो रसवदलङ्कारः सम्पद्यते । यथा

उपोढरागेण विलोलतारकं[4]
तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया
पुरोऽपि रागाद्गलितं[5] न लक्षितम्[6] ॥

---

(1) Ms रसवदनुनयः. (2) Ms तुभ्यं. (3) Ms तस्मात्. (4) Ms विलोलतौरे (corrupt). (5) तोरं for रागात् Ms. (6) This verse, attributed to पाणिनि in सुभाषितावली 1969 and शार्ङ्गधर-पद्धति 3634, is quoted anonymously in ध्वन्यालोक p. 35 (= Ruyyaka p. 83, anon. = Hemacandra p. 274, anon. etc.).

अत्र स्वावसरसमुचितसुकुमारस्वरूपयोर्निशाशशिनोर्वर्णनायां[1]......
रूपकालङ्कारः समारोपितकान्तवृत्तान्तः कविनोपनिबद्धः। स च श्लेषच्छायामनोज्ञविशेषणवक्रभावाद् विशिष्टलिङ्गसामर्थ्याच्च......
काव्यस्य सरसतामुल्लासयंस्तद्विदाह्लादमादधानः स्वयमेव रसवदलङ्कारतां समासादितवान्।

Then he cites another illustrative verse चलापाङ्गां दृष्टिं from *Abhijñāna-śakuntala* i, 24, and goes on to remark : अत्र परमार्थः—प्रधानवृत्तेः शृङ्गारस्य भ्रमरसमारोपितकान्तवृत्तान्तो रसवदलङ्कारः शोभातिशयमाहितवान्। यथा वा

कपोले पत्राली[2]

इत्यादौ। तदेवमनेन न्यायेन

क्षिप्तो हस्तावलग्नः[3]

इत्यत्र रसवदलङ्कारप्रत्याख्यानमयुक्तम्। सत्यमेतत्, किन्तु विप्रलम्भशृङ्गारता तत्र निवार्यते। शेषस्य पुनस्तत्तुल्यवृत्तान्ततया रसवदलङ्कारत्वमनिवार्यमेव। न चालङ्कारान्तरे सति रसवदपेक्षानिबन्धनः संसृष्टिसङ्करव्यपदेशप्रसङ्गः प्रत्याख्येयतां[4] प्रतिपद्यते। यथा

अङ्गुलीभिरिव केशसञ्चयं सन्निगृह्य तिमिरं मरीचिभिः।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी[5]॥

---

For full references, see कवीन्द्रवचन, p. 52.

(1) वर्णनोदम् Ms. The passage after this has a *lacuna* and is corrupt. (2) Already quoted at p. 126. (3) Already quoted at p. 163. (4) संसृष्टिः सङ्करव्यपदेशप्रसङ्गप्रत्याख्येयतां Ms. (5) कुमार० ८६३= quoted in सुभाषितावली 1963 = सरस्वतीकण्ठा० p. 236.

अत्र रसवदलङ्कारस्य रूपकादीनां च सन्निपातः सुतरां न समुल्लासते। तत्र 'चुम्बतीव रजनीमुखं शशी' [इति] उत्प्रेक्षालक्षणस्य रसवदलङ्कारस्य प्राधान्येन निबन्धनम्, तदङ्गत्वेनोपमादीनां केवलस्य प्रस्तुतपरिपोषाय परिनिष्पन्नवृत्तेः।

ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम्।
प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार[1] ॥

'प्रसादयन्ती रवेरभ्यधिकं तापं शरच्चकार' इति समयसम्भवः पदार्थस्वभावस्तद्वाचक-'वारिद'-शब्दाभिधानं विना प्रतीयमानोत्प्रेक्षालक्षणेन रसवदलङ्कारेण कविना काममपि कमनीयतामधिरोपितः, प्रतीत्यन्तरमनोहारिणां 'सकलङ्का'दीनां वाचकादीनामुपनिबन्धनात्, 'पाण्डुपयोधरेणार्द्रनखक्षताभमैन्द्रं धनुर्दधान'इति श्लेषोपमयोश्च तदानुगुण्येन विनिवेशनात्। एवं 'सकलङ्कमपि प्रसादयन्ती (शरत्) परस्याभ्यधिकं तापं चकार' इति रूपकालङ्कारनिबन्धनः प्रकटाङ्गनावृत्तान्तसमा(रोपः सु)तरां समन्वयं सादितवान्। अत्रापि प्रतीयमानवृत्ते रसवदलङ्कारस्य प्राधान्यम्, तदङ्गत्वमुपमादीनामिति पूर्ववदेव सङ्गतिः। Then he cites *Kumāra*∘ iii, 30 ( लग्नद्विरेफाञ्जनभक्तिचित्रं ) as another illustration and concludes the topic with the remark : अयं रसवतां[2] सर्वालङ्काराणां चूडामणिरिवाभाति, quoting two *antara-ślokas* (fragmentary and corrupt in the Ms) in justification.

After this, Kuntaka takes up the figure *dīpaka*, and its three varieties thus : एवं नीरसानां पदार्थानां सरसतां समुल्लासयितुं रसवदलङ्कारं समासादितवान्। इदानीं

(1) Quoted in ∘*Locana*, p. 37. (2) Ms. सरसवतां.

The figure *dīpaka*

स्वरूपमात्रेणैवावस्थितानां वस्तूनां कम[1]प्यतिशयमुद्दोपयितुं दीपकालङ्कारमुपक्रमते। तच्च पूर्वाचार्यैरादिदीपकं मध्यदीपकमन्तदीपकमिति दीप्यमानपदापेक्षया वाक्यस्यादौ मध्ये चान्ते च व्यवस्थितमिति क्रियापदमेव दीपकाख्यमलङ्करणमाख्यातम्। Then he cites the three instances of the three varieties as given by Bhāmaha ii, 27—29 ( मदो जनयति प्रीतिं etc. ). He severely criticises this definition and classification of *dīpaka*, remarking: अत्र क्रियापदानां दीपकत्वं प्रकाशकत्वम्, यस्मात् क्रियापदैरेव[2] प्रकाश्यन्ते स्वसम्बन्धितया स्थाप्यन्ते। तदेवं सर्वस्य कस्यचिद्दीपकव्यतिरेकिणोऽपि क्रियापदस्यैकरूपत्वाद्दीपकाद् द्वैतं प्रसज्यते। किं च शोभाकारित्वस्य युक्तिशून्यत्वादलङ्करणत्वानुपपत्तिः[3]। अन्यच्च, आस्तां तावत् क्रिया, एवं यस्य[4]कस्यचिद्वाक्यवर्तिनः पदस्य सम्बन्धितया पदान्तरद्योतनस्वभाव एव। परस्परान्वयसम्बन्धनिबन्धनाद्वाक्यार्थस्वरूपस्येति पुनरपि दीपकद्वैतमायातम्। आदौ मध्ये चान्ते वा व्यवस्थितं क्रियापदमतिशयमासादयति, येनालङ्कारतां प्रतिपद्यते। तेषां वाक्यादीनां परस्परं तथाविधः कः स्वरूपातिरेकः सम्भवति? क्रियापदप्रकारभेदनिबन्धनं वाक्यस्य यदादिमध्यान्तं तदेव[5] तदर्थवाचकेष्वपि[6] सम्भवतीत्येवं दीपकप्रकारानन्त्यप्रसङ्गः। दीपकालङ्कारविहितवाक्यान्तरवर्तिनः क्रियापदस्य भ्वादिव्यतिरिक्तमेव[7](?) काव्यान्तरव्यपदेशः[8]। यदि वा समानविभक्तानां बहूनां कारणानामेकक्रियापदं प्रकाशकं दीपकमित्युच्यते, तत्रापि काव्यच्छायातिशयकारितायाः किं निबन्धनमिति

---

(1) तसं Ms. (2) कारुखैरेव (?) Ms. (3) ०रणत्वमुपपत्तिः Ms. (4) The phrase कस्यचिद्वाक्य० up to सम्बन्धितया is repeated in the Ms. (5) ०मध्यान्तस्तदेव Ms. (6) तदर्थं वादेष्वपि Ms. (7) ०पदस्याभ्यादि Ms. (8) काव्यान्तरमन्यादेशम् Ms.

वक्तव्यमेव। Rejecting this definition, he thinks that the exposition of Udbhaṭa, whom he calls अभियुक्ततर, is better : प्रस्तुताप्रस्तुतविध्यसामर्थ्यसम्प्राप्तिप्रतीयमानवृत्तिसाम्यमेव नान्यत् किञ्चिदित्यभियुक्ततरैः प्रतिपादितमेव, and quotes Udbhaṭa i, 14.

The illustrative Prakrit verse quoted by Kuntaka in the course of his discussion, is corrupt in the Ms[1] and difficult to reconstruct. Restored, it would possibly run thus :—

चंकमन्ति करीन्दा दिसागअमअगन्धहारिअहिअआ ।
दुक्खं वणे च कइणो भणिइविसममहाकइमग्गे ॥

He maintains, with Udbhaṭa, that there would be no *dīpaka* if there is no प्रतीयमानवृत्तिसाम्य of the प्रस्तुत and the अप्रस्तुत, and approves of the addition of the qualification अन्तर्गतोपमाधर्म. Then he proceeds to define the figure. The *kārikā* on this may be reconstructed from the *vṛtti* thus :

(1) Most of the Prakrit verses, as usual in South Indian Mss, are in a hopeless state of corruption : and I have not been able to restore most of them properly. The छाया would be :

चङ्क्रम्यन्ते करीन्द्रा दिग्गजमदगन्धहारितहृदयाः।
दुःखं वने च कवयो भणितिविषममहाकविमार्गे ॥

The readings in the Ms are : दिसागमवगन्धोवगणाइहाविअहिवआ and दुखं चणे गलन्दा कइवक भणिइ० but the वृत्ति explains : यथा दिक्कुञ्जरमदामोदहारितमानसाः करीन्द्राः कानने कथमपि दुःखं चङ्क्रम्यन्ते, तथा भणितिविषमे वक्रोक्तिविचित्रे महाकविमार्गे......कवय इति 'च'-शब्दार्थः।

औचित्यावहमम्लानं तद्विदाह्लादकारणम् ।
अशक्तं धर्ममर्थानां दीपयद्वस्तुदीपकम् ॥

Thus explained : तदिदानीं दीपकमलङ्कारान्तरकारणं कलयन् कामपि काव्यकमनीयतां कल्पयितुं प्रकारान्तरेण[1] प्रक्रमते—औचित्यावहमित्यादि। वस्तुदीपकं वस्तुसिद्धरूपमलङ्करणं भवतीति सम्बन्धः, क्रियान्तराश्रवणात्। तदेवं सर्वस्य कस्यचिद्वस्तुनः सद्भावापत्तिरित्याह—दीपयत्[2] प्रकाशयदलङ्करणं सम्पद्यते। किं कस्येत्यभिधत्ते—धर्मं[3] परिस्पन्दविशेषमर्थानां वर्णनीयानाम्। कीदृशम्—अशक्ताम् अप्रकटम्, तेनैव प्रकाश्यमानत्वात्। किंस्वरूपं च—औचित्यावहम्। औचित्यमौदार्यम् (!) आवहति यः स तथोक्तः। अन्यच्च किंविधम्—अम्लानम्, प्रत्यग्रम्। अनालीढमिति यावत्। एवंस्वरूपत्वात्—तद्विदाह्लादकारणम्, काव्यविदानन्दनिमित्तम्।

Kuntaka's classification of *dīpaka*

Owing to the defective nature of our Ms, it is difficu.t to make out precisely Kuntaka's classification of *dīpaka*; but the *kārikā* may be provisionally reconstructed thus :

एकं प्रकाशकं सन्ति भूयांसि भूयसां क्वचित्।
केवलं पङ्क्तिसंस्थं वा द्विविधं परिदृश्यते ॥

which is explained in this way : अस्यैव प्रकारान्निरूपयति—द्विविधं परिदृश्यते। द्विप्रकारमवलोक्यते, लक्ष्ये विभाव्यते। कथम्—केवलमसहायम्, पङ्क्तिसंस्थं[4] वा पङ्क्तौ[5] व्यवस्थितं तत्तुल्यकक्ष्या-

(1) But no other कारिका on दीपक is to be found in the text previous to it. (2) दीपवत्‌ Ms. (3) The Ms omits the अनुस्वार. (4) पङ्क्तिसंख्या वा Ms. (5) पक्तो Ms.

(यां)[1] सहायान्तरोपरचितायां[2] वर्तमानम्। कथम्—एकं बहूनां पदार्थानामेकं प्रकाशकं दीपकं केवलमित्युच्यते। यथा—

असारं संसारम्[3]

इत्यादि। अत्र 'विधातुं व्यवसितः' कर्ता संसारादीनामसारत्वप्रभृतीन् धर्मानुद्योतयन् दीपकालङ्कारतामाप्तवान्। पङ्क्तिसंस्थम्—भूयांसि बहूनि वस्तूनि दीपकानि भूयसां प्रभूतानां वर्णनीयानां सन्ति[4] वा क्वचिद् भवन्ति वा कस्मिंश्चिद्विषये। As an instance of this he cites two Prakrit verses, one of which चन्दनमअएहिं is quoted in *Dhvanyáloka* p. 109 and by Hemacandra p. 254. The first of these verses may be conjecturally restored as follows :

कइकेसरी वअणाण मोत्तिअरअणाण आइवेअटिकः।
ठाणाठाणं जाणइ कुसुमाण अ जीसमालारो[5] ॥

With regard to the subdivision of पङ्क्तिसंस्थ variety (which would correspond to मालादीपक of later writers), the passage is not clear : but it appears to have been subdivided again into three kinds ( त्रिप्रकारम् ). The *kārikā* on this point cannot be restored, but it is explained in the *vṛtti* in this way : यदपरं पङ्क्तिसंस्थं

---

(1) Ms. reads : तत्तुल्यकच०. The emendation is conjectural. (2) सहायान्तरो पारचितायां० Ms. (3) Already cited at p. 12 from मालतीमाधव. (4) सति Ms. (5) The छाया would be :

कविकेसरी वचनानां मौक्तिकरत्नानां आदिवैकटिकः।
स्थानास्थानं जानाति कुसुमानां च जीर्णमालाकारः ॥

The reading of the Ms is :

कविकेसरा एआण मौक्तिरअणाण आइवेअदि।
जाणिढीयं जाणइ कुसुमाण अ जगमालारोन ॥

नाम......कारणात् त्रिप्रकारम्। त्रयः प्रकाराः प्रभेदा यस्येति विग्रहः। तत्र प्रथमस्तावदनन्तरोक्तो 'भूयांसि भूयसां क्वचिद् भवन्ति' इति। द्वितीयो—दीपकं दीपयत्यन्यत्रान्यदिति, (अ)न्यस्यातिशयोत्पादकत्वेन दीपकम्। यद्दीपितं[1] तत्कर्मभूतमन्यत् कर्तृभूतं दीपयति प्रकाशयति तदप्यन्यद्दीपयतीति। As an instance of the second variety (which was probably named दीपकदीपक as distinguished from the third variety दीपितदीपक), he cites :

द्वितीयदीपकप्रकारो यथा—

क्षोणीमण्डलमण्डनं नृपतयस्तेषां श्रियो भूषणं
ताः शोभां गमयत्यचापलमिदं प्रागल्भ्यतो राजते।
तद्भूष्यं[2] नयवर्त्मनस्तदपि च शौर्यक्रियालङ्कृतं
त्रिभ्राणं यदियत्तया त्रिभुवनं छेत्तुं व्यवस्येदपि॥

अत्रोत्तरोत्तराणि पूर्वपूर्वपददीपकानि मालायां[3] कविनोपनिबद्धानीति[4]। यथा वा—

शुचि भूषयति श्रुतं वपुः प्रशमस्तस्य भवत्यलङ्क्रिया।
प्रशमाभरणं पराक्रमः स नयापादितसिद्धिभूषणः॥ (*Kirāta*⁰ ii,32)

यथा च—

चारुता वपुरभूषयदासाम् (*Śiśupāla*⁰ x, 33)[5],

इत्यादि। तृतीयप्रकारोऽत्रैव श्लोकार्धे[6] 'दीपक'-स्थाने 'दीपित'मिति

---

(1) यद्दिपितं Ms. (2) The Ms reads तद्दूष्यं and यदियत्तदा. Inspite of the emendations, the last two lines of this verse are still somewhat obscure in sense. Should we read चेच्छौर्यक्रिया॰ ? In this case, we can retain तदा in यदियत्तदा. (3) मालतायां Ms. (4) कवितापनिबद्धेति Ms. (5) Already quoted above, i, 24. (6) i.e. in the कारिका. This makes it probable that this third variety of पङ्क्तिसंस्थ दीपक was called दीपितदीपक as distinguished from the second variety which was probably called दीपकदीपक.

पाठान्तरं विधाय व्याख्येयः। तदयमत्रार्थः—यद्दीपितं यदन्येन केनचिदुत्पादितातिशयं सम्पादितं वस्तु तत्कर्तृभूतमन्यद्दीपयदुत्तेजयति ......। यथा—

मदो जनयति प्रीतिम् (Bhāmaha ii, 27) इत्यादि।

Kuntaka has already criticised this illustration of Bhāmaha; how is it that he cites it himself again? He answers the objection thus: ननु पूर्वाचार्यैश्चैतदेव पूर्वमुदाहृतं तदेव प्रथमं प्रत्याख्यायेदानीं समाहितमित्यभिप्रायो व्याख्यातव्यः। सत्यमुक्तम्। तदयं व्याख्यायते—क्रियापदमेकमेव[1] दीपकमिति तेषां तात्पर्यम्, अस्माकं पुनः कर्तृपदादिनिबन्धनानि दीपकानि बहूनि सम्भवन्तीति[2]।

Kuntaka concludes with a *kārikā* which can only be partially restored from the *vṛtti*:

यथायोगिक्रियापदं[3] मनःसंवादि तद्विदाम्।
वर्णनीयस्य विच्छित्तेः कारणं [वस्तुदीपकम् ?]॥

The commentary on this is as follows: इदानीमेतदेवोपसंहरति—यथायोगिक्रियापदम् [इत्यादि]। यथा येन प्रकारेण युज्यते इति यथायोगि क्रियापदं यस्य तत्तथोक्तम्। तेन यथा सम्बन्धमनुभवितुं शक्नोति तथा दीपके क्रिया। तद्विदां काव्यज्ञानां मनसि संवदति चेतसि प्रतिफलति यत्तत्तथोक्तम्। तस्मादेव सहृदयहृदयसंवादमाहात्म्यात्[4] 'मुखमिन्दुः' इत्यादौ न केवलं रूपकं [इति] यावत्।

---

(1) क्रपापर० Ms. (2) Later writers, however, would probably regard Kuntaka's केवलदीपक as nothing more than कारकदीपक; and the first variety of पङ्क्तिसंस्थ as क्रियादीपक. (3) The metre here is defective. (4) ०संवादि० Ms.

किं तारुण्यतरो:[1]

इत्येवमाद्यपि। तस्मादेव च सूक्ष्ममतिरिक्तं वा न किञ्चिदुपमानात् साम्यं तस्य निमित्तमिति सचेतसः प्रमाणम्। अन्यच्च कीदृशम्—वर्णनीयस्य विच्छित्तेः कारणम्। वर्णनीयस्य प्रस्तावाधिकृतस्य पदार्थस्य विच्छित्तेरुपशोभायाः कारणं निमित्तभूतम्। न पुनर्जेयत्व(?) प्रमेयत्वादि सामान्यम्। यस्मात् पूर्वोक्तलक्षणेन साम्येन वर्णनीयं सहृदयहारितामवतरति।

After this, Kuntaka proceeds to the treatment of *rūpaka*. In ii, 14 ( यन्मूला सरसोल्लेखा ) he has already indicated that *upacāra-vakratā* lies at the very root of this figure ( यस्मादुपचारवक्रताजीवितमेतदलङ्करणं प्रथममेव समाख्यातम्—यन्मूला सरसोल्लेखा रूपकादिरलङ्कृतिरिति ); but now he intends to deal with its varieties (एवं च रूपकादिसामान्यलक्षणमुल्लिख्य प्रकारपर्यालोचनेन तमेवोन्मीलयति). He accepts Bhāmaha's classification of the figure (ii, 22) into समस्तवस्तुविषय and एकदेशविवर्ति. The definition of *rūpaka* itself is not given here, but appears later after the treatment of *paryāyôkta*[2], although this should occur in the

The figure *rūpaka*

(1) Already cited above p. 60 (i, 92). (2) After the treatment of पर्यायोक्त, ग्रन्थपातः is marked in the Ms. After this comes रूपक. Possibly the leaves of the original Ms got displaced. There seems to be another lacuna after रूपक, as व्याजस्तुति which is taken up next, is not defined : and the illustration cited there applies to the latter figure ( and not to the former ).

present context[1]. The *kārikā* on *rūpaka*, given there, may be provisionally restored from the *vṛtti* thus :

उपचारैकसर्वस्वं [यच्च तत् ?] साम्यमुद्वहत् ।
यदर्पयति रूपं स्वं वस्तु तद्रूपकं विदुः ॥

on which the commentary runs : रूपकं विविनक्ति—उपचारेत्यादि । वस्तु तद्रूपकं विदुः तद्वस्तु पदार्थस्वरूपं रूपकाख्यमलङ्कारं विदुः, जना इति [ शेषः ] । कीदृशम्—यदर्पयतीत्या(दि यत्) कर्तृभूतमर्पयति विन्यस्यति । (किम्—स्व)मात्मीयं रूपम्, वा[क्य]स्य वाचकात्मकं परिस्पन्दम्, अलङ्कारप्रस्तावादलङ्कारस्यैव स्वसम्बन्धित्वात् । किं कुर्वत्[2]—साम्यमुद्व(हत्) समत्वं धारयत्[3] । उपचारैकसर्वस्वम्—उपचारस्तत्त्वाध्यारोपस्तस्यैकं सर्वस्वं केवलमेव जीवितम्, तन्निबन्धनत्वाद् उपचारैः प्रवृत्तेः । The commentary then adds : अन्यच्च किंरूपम्—मनःसंवादि तद्विदाम् । This phrase belongs really to the previous concluding *kārikā* on *dīpaka*[4]. The term साम्य must be qualified by उपचारैकसर्वस्व and mean from the context प्रतीयमानवृत्तिसाम्य (as in *dīpaka*).

The next half-*kārikā* probably reads :

समस्तवस्तुविषयमेकदेशविवर्ति च ।

---

(1) The author himself says : एकदेशवृत्तित्वमनेकदेशवृत्तित्वं च रूपकस्य दीपकेन समानत्वमिति तदनन्तरमस्योपनिबन्धनम्, which explains the object of this particular order of treatment. (2) कुर्वन् Ms. (3) धारयन् Ms. (4) It is probable that the folios of the original Ms got disarranged, causing this confusion to the scribe. See above p. 184, foot-note 2.

which reproduces Bhāmaha ii, 22a. The first of these two varieties of *rūpaka* is thus explained : समस्तवस्तु विषयो यस्य तत्तथोक्तम्। तदयमत्रार्थः[1]—यत् सर्वाण्येव प्राधान्येन वाच्यतया सकलवाक्योपारूढान्यभिधेयान्यालङ्कार्यतया सुन्दरस्वपरिस्पन्दसमर्पणेन रूपान्तरापादनं गोचरो यस्येति। Illustration :

Its classification

मृदुतनुलतावसन्तः सुन्दरवदनेन्दुबिम्बसितपक्षः।
मन्मथमातङ्गमदो जयत्यहो[2] तरुणतारम्भः॥

With regard to *ekadeśa-vivarti*, Kuntaka explains : अत्र पूर्वाचार्यैर्व्याख्यातम्—यथा यदेकदेशेन विवर्तते विघटते विशेषेण वा वर्तते तथोक्तम् इत्युभयथाप्येतदयुक्तं भवति। यद्वाक्यस्य यत्किंश्चिदेव स्थाने स्वपरिस्पन्दसमर्पणात्मकरूपणमादधाति क्वचिदेवेति तदेकदेशविवर्तिरूपकम्। यथा—

तडिद्वलयकक्ष्याणां[3] वलाकामालभारिणाम्[4]।
पयोमुचां ध्वनिर्धीरो[5] दुनोति मम तां प्रियाम्[6]॥

अत्र विद्युद्वलयस्य कक्ष्यात्वेन, वलाकानां तन्मालात्वेन रूपणं विद्यते। पयोमुचां पुनर्दन्तिभावो नास्तीत्येक[देश]विवर्तिरूपकमल(ङ्कारः)। तदत्यर्थयुक्तियुक्तम्; यस्मादलङ्करणस्यालङ्कार्यशोभातिशयोत्पादनमेव प्रयोजनम्, नान्यत्किञ्चित्। यदुक्तम्—रूपकापेक्षया किञ्चिद्विलक्षणमेतेन यदि सम्पाद्यते तदेतस्य रूपकप्रकारान्तरतोपपत्तिः[7] स्यात्, तदेतदास्तां तावत्। प्रत्युत, कक्ष्यादिनिमित्तरूपणोचितमुख्यवस्तु-

(1) ०मत्रावार्थों (corrupt) Ms. (2) जयति अरोसरूणा० (corrupt) Ms. (3) तदिवलयकचणां (corrupt) Ms. (4) वलंकामालताभालतारीणाम् Ms. (5) ०नारी धुनाति समतां थिय: Ms. (6) The verse is corrupt in Ms. It is quoted from भामह ii, 24. (7) ०न्तरसुपपत्तिः Ms.

विषये विघटमानत्वादलङ्कारदोषत्वं दुर्निवारतामवलम्बते। तस्मा-दन्यच्चैवैतदस्मात् समाधीयते। रूपकालङ्कारस्य परमार्थस्तावदयम्—यत् प्रसिद्धसौन्दर्यातिशयपदार्थसौकुमार्यनिबन्धनं वर्णनीयस्य वस्तुनः साम्यसमुल्लिखितं स्वरूपसमर्पणग्रहणसामर्थ्यमविसंवादि। तेन 'मुख-मिन्दुः' इत्यत्र मुखमेव दुःसम्पाद्यते (?), तेन रूपेण विवर्तते। तदेवमय-मलङ्कारः। As further instances he cites

हिमाचलसुतावल्लिगाढालि(ङ्गित)मूर्तये।
संसारमरुमार्गैककल्पवृक्षाय ते नमः[1] ॥

Also उपोढरागेण already cited above (p. 175). As an instance of प्रतीयमानरूपक, is cited the verse लावण्य-कान्तिपरिपूरित॰, which Ānandavardhana (p. 110) quotes as his own. The topic appears to be concluded with the *kārikā* (restored conjecturally) :

नयन्ति कवयः काश्चिद्वक्रभावरहस्यताम्।
अलङ्कारान्तरोल्लेखसहायं प्रतिभावशात् ॥

The commentary from which this is reconstructed is : तदेव विच्छित्त्यन्तरेण विशिनष्टि—एतदेव रूपकाख्यमलङ्करणं काश्चिदलौकिकीं वक्रभावरहस्यतां वक्रत्वपरमार्थतां नयन्ति प्राप-यन्ति। तथोपनिबद्धानि यथा वक्रताविच्छित्ति[2]···ादिरूढिरमणीय तया तदेव तत्त्वं परं प्रतिभासते। कीदृशम्—अलङ्कारा(न्तरो)ल्लेख-सहायम्। अलङ्कारान्तरस्यान्यस्य ससन्देहोत्प्रेक्षाप्रभृतेः[3] उल्लेखः समुद्भेदः सहायः काव्यशोभातिशयोत्पादने सहकारो यस्य (तत्तथो-क्तम्। क)स्मान्नयन्ति—प्रतिभावशात् स्वशक्तेरायत्तत्वात्। तथाविधे

---

(1) ॰वृक्षा यथा नमः Ms. ; also वर्तये for मूर्तये and संसारमनु॰ for संसारमरु॰ in Ms. (2) विच्छित्तितेद्वादिरूढि (3) ॰प्रवृत्ते Ms

लोककान्तिक्रान्तिगोचरे विषये तस्योपनिबन्धो[1] विधीयते। यत्र तथाप्रसिद्धाभावात् सिद्धव्यवहारावतरणं साहसिकमिवावभासते विभूषणान्तरसहायस्य पुनरुल्लेखत्वेन[2] विधीयमानत्वात् सहृदयहृदयसंवादसुन्दरी परा प्रौढिरुत्पद्यते। The verse किं तारुण्यतरोः (already cited above i, 92) and another half-verse (too corrupt in the text) are cited as illustrations.

Then comes the figure *aprastuta-praśaṃsā*, of which the *kārikā*, reconstructed, would be as follows :

अप्रस्तुतोऽपि विच्छित्तिं प्रस्तुतस्यावतारयन् ।
यत्र तत्साम्यमाश्रित्य सम्बन्धान्तरमेव वा ॥
वाक्यार्थोऽसत्यभूतो वा प्राप्यते वर्णनीयताम् ।
अप्रस्तुतप्रशंसेति कथितासावलङ्कृतिः (?) ॥

The *vṛtti* runs thus : एवं रूपकं विचार्य तद्दर्शन(?)सम्पन्निबन्धना[3]मप्रस्तुतप्रशंसां प्रस्तौति—अप्रस्तुतोऽपीत्यादि। अप्रस्तुतप्रशंसेति (कथिता साव)लङ्कृतिः—अप्रस्तुतप्रशंसेति नाम्ना[4] सा कथिता……(अ)लङ्कारविद्भिरलङ्कृतिः। कीदृशी—यत्र यस्यामप्रस्तुतोऽप्यविवक्षितः पदार्थो वर्णनी(यतां) प्रति[5] प्राप्यते वर्णनाविषयः सम्पाद्यते। किं कुर्वन्—प्रस्तुतस्य विवक्षितार्थस्य विच्छित्तिमुपशोभामवतारयन् समुल्लासयन्। द्विविधो हि प्रस्तुतः पदार्थः सम्भवति—वाक्यान्तर्भूतपदमात्रनिबद्धः, सकलवाक्यव्यापककार्यो विविधस्वपरिस्पन्दातिशयविशिष्टप्राधान्येन वर्तमानः [च]। तदुभयरूपमपि प्रस्तुतं प्रतीयमानतया चेतसि विधाय पदार्थान्तरम-

The figure *aprastuta-pras'amsā*

(1) ०निबद्धो Ms. (2) Ms is corrupt here and reads पुनरुच्छेदशेन (?). (3) ०निबन्धनाना० Ms. (4) मावा Ms. Or is it प्रमावा ? (5) This word seems to be redundant.

प्रस्तुतं तद्विच्छित्तिसम्पत्तये वर्णनीयतामस्यामलङ्कृतौ कवयः प्रापयन्ति। किं कृत्वा—तत्साम्यमाश्रित्य। तदनन्तरोक्तं रूपकालङ्कारोपकारि साम्यं समत्वं निमित्तीकृत्य। सम्बन्धान्तरमेव वा[1] निमित्तभावादि संश्रित्य। वाक्यार्थोऽसत्य(भू)तो वा—परस्परान्वयपदसमुदायलक्षणवाक्यार्थो[2] [ऽसत्य?]भूतः। साम्यं सम्बन्धान्तरं वा समाश्रित्याप्रस्तुतं प्रस्तुतशोभायै वर्णनीयतां यत्र नयन्तीति।

As an instance of साम्यसमाश्रयणाद्वाक्यान्तर्भूतप्रस्तुतपदार्थप्रशंसा he cites लावण्यसिन्धुरपरैव, already quoted in *Dhvanyâloka* p. 205. As to साम्यश्रयणात् सकलवाक्यव्यापकप्रस्तुतपदार्थप्रशंसा, which constitutes the second variety, the following illustration is given (=*Subhāṣitâvali* 821):

छाया नात्मन एव या कथमसावन्यस्य (निष्प्र)ग्रहा
ग्रीष्मोष्मापदि शीतलस्तलभुवि स्पर्शोऽनिलादेः कुतः।
वार्ता वर्षशतैरनेकलवलं[3] भावीति वार्तैव सा
द्राघिम्णा मुषिताः कियच्चिरमहो तालेन बाला वयम्॥

With regard to two such varieties due to सम्बन्धान्तराश्रयण, the example of वाक्यान्तर्भूतप्रस्तुतपदार्थप्रशंसा is the verse इन्दुर्लिप्त इवाञ्जनेन from *Bāla-rāmāyaṇa* i, 42. The example of सकलवाक्यव्यापकप्रस्तुतप्रशंसा under this head is as follows:

---

(1) These three words are repeated in Ms. (2) The Ms. reads ०लक्षणवाक्यकार्यभूतः, which it not intelligible in the context. (3) The सुभाषितावलि reads वर्षशते गते किल फलं. But the word लवल may here mean 'the fruit of the लवली creeper'. The emendation लवनं (= mowing) is easy, but does not appear to be necessary.

परामृशति सायकं क्षिपति लोचनं[1] कार्मुके
विलोकयति वल्लभां स्मितसुधार्द्रवक्त्रं स्मरः[2] ।
मधोः किमपि भाषते भुवननिर्जयाग्रावनिं[3]
गतोऽहमिति (हर्षितः) स्पृशति गोत्रलेखामहो ॥

Here, the *vrtti* explains, the अप्रस्तुत is मन्मथचेष्टातिशय, while the प्रस्तुत refers to तरुणीतारुण्यावतार. For the example of असत्यभूतवाक्यार्थतात्पर्याप्रस्तुतप्रशंसा, a Prakrit verse is cited, which, however, is too corrupt in the Ms to be properly restored. Kuntaka concludes this topic with the remark: तदेवमयमप्रस्तुतप्रशंसाव्यवहारः कवीनामतिविततप्रपञ्चः परिदृश्यते। तस्मात् सहृदयैश्च स्वयमेवोत्प्रेक्षणीयः। प्रशंसाशब्दोऽत्र अर्थप्रकाशादिवद्(?) विपरीतलक्षणया वर्तते।

Then the figure *paryāyôkta* is introduced. The *kārikā* reconstructed would be as follows:

The figure *paryāyôkta*

यद्वाक्यान्तरवक्तव्यं तदन्येन समर्थ्यते।
येनोपशोभानिष्पत्त्यै पर्यायोक्तं तदुच्यते॥

This is explained thus: एवमप्रस्तुतप्रशंसां विचार्य विवक्षितार्थप्रतिपादनाय प्रकारान्तराभिधानत्वादनयैव समानप्रायं पर्यायोक्तं विचारयति—यद्वाक्यान्तरेत्यादि। पर्यायोक्तं तदुच्यते—पर्यायोक्ताभिधानमलङ्करणं तदभिधीयते। कीदृशम्—यद्वाक्यान्तरवक्तव्यं वस्तु वाक्यार्थलक्षणं पदसमुदायान्तराभिधेयं तदन्येन वाक्यान्तरेण येन समर्थ्यते प्रतिपाद्यते। किमर्थम्—उपशोभानिष्पत्त्यै विच्छित्तिसम्-

(1) लोभनं Ms. (2) स्मरन् Ms. (3) ०निर्जयाग्रावनिं Ms.

त्ये। तत्पर्यायोक्तमित्यर्थः। तदेवं पर्यायवक्रत्वात् किमन्यातिरिच्यते? पर्यायवक्रत्वस्य पदार्थमात्रं वाच्यतया विषयः, पर्यायोक्तस्य वाक्यार्थोऽप्यङ्गतयेति तस्मात् पृथगभिधीयते। उदाहरणं यथा (quoted also in *Dhvanyâloka* p. 89) :

चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य।
आलिङ्गनोद्दामविलासव(न्ध्यं रतोत्सवं चुम्बनमात्रशेषम्)॥

After this, there is a gap in the Ms marked with अत्र ग्रन्थपातः। This is followed by the treatment of *rūpaka*, which we have already quoted above. The verse which follows this is, however, not an instance of *rūpaka* but of *vyājastuti*, the treatment of which is thus also apparently lost in the Ms (though not marked as such in the Ms). The verse is as follow :

भूभारोद्वहनाय शेषशिरसां सार्थेन[1] सन्नह्यति
विश्वस्य स्थितये स्वयं स भगवान् जागर्ति देवो हरिः।
अद्याप्यत्र च नाभिमानमसमं राजंस्त्वया तन्वता [2]
विश्रान्तिः[3] क्षणमेकमेव न तयोर्जातेति कोऽयं क्रमः॥

Other examples cited are इन्दोर्लक्ष्म (already quoted p.169), हे हेलाजित (cited at p. 59 ; i, 90) and नामाप्यन्यतरो: (already cited p. 59 ; i, 91).

This is followed by the treatment of *utprekṣā*, on which the three *kārikās*, would read as follows, when reconstructed :

The figure *utprekṣā*

(1) सार्धेन Ms. (2) नत्वता Ms. (3) The विसर्ग is omitted in the Ms.

सम्भावनानुमानेन साद्दश्येनोभयेन वा ।
निर्वर्ण्यातिशयोद्रेकप्रतिपादनवाञ्छया ॥
वाच्यवाचकसामर्थ्याच्चिप्तस्वार्थैरिवादिभिः ।
तदिवेति तदेवेति वादिभिर्वाचकं विना[1] (?) ॥
समुल्लिखितवाक्यार्थव्यतिरिक्तार्थयोजनम् ।
उत्प्रेक्षा ............................... ॥

The commentary explains : सम्भावनेत्यादि । समुल्लिखितवाक्यार्थव्यतिरिक्तार्थयोजनम् उत्प्रेक्षा । समुल्लिखितः सम्यगुल्लिखितः स्वाभाविकत्वेन समर्पयितुं प्रस्तावितो[2] वाक्यार्थः पदसमुदायोऽभिधेयवस्तु तस्माद् व्यतिरिक्तस्यार्थस्य वाक्यान्तरतात्पर्यलक्षणस्य योजनमुपपाद उत्प्रेक्षाभिधानमलङ्करणम् । उत्प्रेक्षणमुत्प्रेक्षेति विगृह्यते । किं[3]साधनेनेत्याह—सम्भावनानुमानेन[4] । सम्भावनया यदनुमानं सम्भाव्यमानस्य......तेन । Then it proceeds : प्रकारान्तरेणाप्येषा सम्भवतीत्याह—साद्दश्येनेति । साद्दश्येन साम्येनापि हेतुना समुल्लिखितवाक्यार्थव्यतिरिक्तार्थयोजनमुत्प्रेक्षैव । द्विविधं साद्दश्यं सम्भवति—वास्तवं काल्पनिकं च । तत्र वास्तवमुपमादिविषयम् । काल्पनिकमिहाश्रीयते । Then it goes on after a few corrupt lines : प्रकारान्तरमस्याः प्रतिपादयति—उभयेन वा ।

(1) This line does not appear to be explained in the following वृत्ति ; but its presence in the कारिका is indicated in the course of the discussion on चन्द्रमासक्त॰ given below and by the वृत्ति on the next कारिका, which quotes this line. The restoration of the कारिका is not satisfactory, as the वृत्ति has many *lacunae* and corrupt lines. The word उत्प्रेक्षा ought to have occurred in the कारिका, as it is explained in the वृत्ति, but possibly one whole line of the कारिका is missing.
(2) ॰यितुमास्तवितो Ms. (3) न Ms. (4) एववंभानानुमानेन Ms.

सम्भावनानुमानेन सादृश्यलक्षणेनोभयेन वा कारणद्वितयेन संवलितवृत्तिना प्रस्तुतव्यति(रिक्तार्था)न्तरयोजनम्। उत्प्रेक्षाप्रकार[स्य] तृतीयस्याप्यस्य केनाभिप्रायेणोपनिबन्धनमित्याह—निर्वर्ण्यातिशयोद्रेकप्रतिपादनवा(ञ्छ)या वर्णनीयोत्कर्षो(न्मेष)समर्पणाकाङ्क्षया। कथम्—तदिवेति तदेवेति वा द्वाभ्यां प्रकाराभ्याम्। तदिव अप्रस्तुतमिव, तदतिशयप्रतिपादनाय प्रस्तुतसादृश्योपनिबन्धः। तदेवेत्यप्रस्तुत[मिवेति] तत्स्वरूपप्रसारणपूर्वकं प्रस्तुतस्वरूपसमारोपः। प्रस्तुतोत्कर्षधाराधिरोहप्रतिपत्तये तात्पर्यान्तरयोजनम्। कैर्वाक्यैरुत्प्रेक्षा प्रकाश्यते [इ]त्याह—इवादिभिः। इवप्रभृतिभिः शब्दैर्यथायोगं प्रयुज्यमानैरित्यर्थः। न चेदिति पक्षान्तरमभिधत्ते—वाच्यवाचकसामर्थ्याक्षिप्तस्वार्थैः। तैरेव प्रयुज्यमानैः, प्रतीयमानवृत्तिभिर्वा। Example of सम्भावनानुमानोत्प्रेक्षा—

आपीडलोभादुपकर्णमेत्य प्रत्याहितः[1] पांशुयुतैर्द्विरेफैः।
अस्वास्यमानेव(?)[2] महीपतीनां सम्मोहमन्त्रो[3] मकरध्वजेन॥

काल्पनिकसादृश्योदाहरणम्, यथा

राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः (*Meghadūta* 58)

यथा वा

निर्मोकमुक्तिरिव [या] गगनोरगस्य॥ इत्यादि।

The वास्तवसादृश्योदाहरण is a Prakrit verse which can not be reconstructed from the Ms. So is the Prakrit verse given as उभयोदाहरण. The following verse is also quoted as an example of वास्तवसादृश्योत्प्रेक्षा—

(1) प्रत्याहितो Ms. (2) अनूद्यमाणेन would be a conjectural emendation: but it is not clear whether the kind of उत्प्रेक्षा illustrated by Kuntaka requires a वाचक like इव or not. The difficulty would perhaps be removed by reading अमर्षणेनेव. (3) ०मन्त्रं Ms.

उत्फुल्लचारुकुसुमस्तबकेन नम्रा[1]
येयं धुता रुचिरचूतलता मृगाक्ष्या ।
शङ्के न वा विरहिणीमृदुमर्दनस्य
मारस्य तर्जितमिदं प्रतिपुष्प चापम् ॥

Then : तदेवेत्यत्र वादिभिर्विनोदाहरणम्, यथा
चन्दनासक्तभुजगनिःश्वासानिलमूर्च्छितः ।
मूर्च्छयत्येष[2] पथिकान् मधौ[3] मलयमारुतः[4] ॥

यथा वा—देवि त्वन्मुखपङ्कजेन (from *Ratnāvalī*, already cited above p. 99) इत्यादि। यथा वा—त्वं रक्षसा भीरु[5] (from *Raghu*°, already cited above p. 115)। तदेवेत्यत्र वाचकं विनोदाहरणम्, यथा—एकैकं दलम् (already cited from *Bāla-rāmā*° vii, at p. 66, no. 102, above).

Then the author goes on to deal with another variety of उत्प्रेक्षा, the *kārikā* on which may be reconstructed as follows :

प्रतिभासात्तथा बोद्धुः स्वस्पन्दमहिमोचितम् ।
वस्तुनो निष्क्रियस्यापि क्रियायां कर्तृतार्पणम् ॥

explained as : तदिदमपरमुत्प्रेक्षायाः प्रकारान्तरं परिदृश्यते—प्रतिभासादित्यादि। क्रियायां साध्यस्वरूपायां कर्तृतारोपणं स्वतन्त्रत्वसमारोपणम्। कस्य—वस्तुनः पदार्थस्य निष्क्रियस्य क्रियाविरहितस्यापि। कीदृशम्—स्वस्पन्दमहिमोचितम्। तस्य पदार्थस्य यः स्वस्पन्दमहिमा स्वभावोत्कर्षस्तस्योचितमनुरूपम्। कस्मात्—बोद्धुरनुभवितु-

(1) The Ms reads पुन which is corrupt and contrary to metre. (2) मूर्च्छत्येष Ms. (3) पथिकामधौ Ms. (4) The verse is quoted anonymously in ध्वन्यालोक p. 113. (5) त्वं वचसाधित्यादि Ms.

स्तथा तेन प्रकारेण प्रतिभासादवबोधात्[1] । 'निर्वर्ण्यातिशयोद्रेकप्रतिपादनवाञ्छया' 'तदिवेति तद्वेवेति वादिभि[र्वाचकं] विना' इति[2] पूर्ववदिहापि सम्बन्धनीये । उदाहरणं यथा—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः । (Daṇḍin ii, 226)[3]
यथा वा—तरल्लीवाङ्गानि स्खलदमललावण्यजलधौ (already quoted above p. 119). The third example is corrupt and fragmentary in the Ms. Regarding this variety, Kuntaka goes on to remark : अत्र दण्डिना विहितमिति न पुनर्विधीयते. Here a concluding *antara-śloka* is quoted :

अपहृत्यान्यालङ्कारलावण्यातिशयश्रियः ।
उत्प्रेक्षा प्रथमोल्लेखजीवितत्वेन जृम्भते ॥ इत्यन्तरश्लोकः ।

The figure *atiśayokti*

The *atiśayokti* is then taken up. The *kārikā*, reconstructed, appears to be as follows :

यस्यामतिशयः कोऽपि विच्छित्त्या प्रतिपाद्यते ।
वर्णनीयस्य धर्माणां तद्विदाह्लाददायिनाम् ॥

on which the commentary runs thus : एवमुत्प्रेक्षां व्याख्याय सातिशयत्वसादृश्यसमुल्लसितावसरामतिशयोक्तिं प्रस्तौति—यस्यामित्यादि :·········सातिशयोक्तिरलङ्कृतिरभिधीयते । कीदृशी—यस्यामतिशयः प्रकर्षकाष्ठाधिरोहः कोऽप्यतिक्रान्तप्रसिद्धव्यवहारसरणिः[4] विच्छित्त्या प्रतिपाद्यते वैदग्ध्यभङ्ग्या समर्प्यते । कस्य—वर्ण-

(1) प्रतिभासना॰ Ms. (2) नावेति for विनेति Ms. (3) This verse occurs also in मृच्छकटिक (ed. Nir. Sag. Press., 1916. i, 34), चारुदत्त (i, 19) and बालचरित (i, 15). Also quoted in सुभाषितावलि 1890 and शार्ङ्गधरपद्धति 3603 and attributed therein to विक्रमादित्य and भर्तृमेण्ठ.
(4) ॰प्रसिद्धापहार॰ Ms.

नीयस्य धर्माणाम्, प्रस्तावाधिकृतस्य वस्तुनः[1] स्वभावानुसम्बन्धिनां परिस्पन्दानाम्। कीदृशानाम्—तद्विदाह्लाददायिनाम्, काव्यविदानन्दकारिणाम्। यस्मात्सहृदयहृदयाह्लादकारि स्वस्पन्दसुन्दरत्वमेव वाक्यार्थः, ततस्तदतिशयपरिपोषिकायामतिशयोक्तावलङ्कारकृतः कृतादराः।

As instances, five verses are quoted and discussed, among which occur Bhāmaha ii, 82 :

स्वपुष्पच्छविहारिण्यश्चन्द्रहासा तिरोहिताः।
अन्वमीयत भृङ्गालीवाचा सप्तच्छदद्रुमाः॥

and *Kumāra*° viii, 62 ( शक्यमोषधिपतेर्नवोदयाः ). Of the other two verses, one may be restored thus :

यस्य प्रोच्छ्रयति[2] प्रतापतपने तेजस्विनीमित्यलं[3]
लोकालोकधराधरावति यशःशीतांशुबिम्बे[4] प्रथा[5]।
त्रैलोक्यप्रथितावदानमहिमच्चोणीशवंशोद्भवौ[6]
सूर्य्याचन्द्रमसौ स्वयं तु[7] कुशलच्छायां[8] समारोहतः॥

The figure *upamā*

After this, Kuntaka proceeds to deal in detail with *upamā*, which is one of the most important poetic figures of the Sanskrit theorists : but unfortunately the Ms in this part is hopelessly corrupt and imperfect, and it is not possible to follow his treatment properly or

(1) Ms reads सम्बन्धिनां after वस्तुनः and before स्वभावानुसम्बन्धिनां. (2) यस्य प्रज्ञायति in Ms, contrary to metre. (3) तेजस्विनीमित्यलं Ms. (4) श्रयः for यशः in Ms. (5) यथा Ms. (6) ०प्रथितापदानमहिमा Ms. (7) स्वरन्त Ms. (8) For the sense सकलच्छायां would be better reading.

give consistent extracts. It is difficult to reconstruct the missing *kārikā*, but it may tentatively be put as follows :

विवक्षितपरिस्पन्दमनोहारित्वसिद्धये ।
वस्तुनः केनचित् साम्यं तदुत्कर्षवतोपमा ॥
तां साधारणधर्मोक्तौ वाक्यार्थे वा तदन्वयात् ।
इवादिरपि विच्छित्त्या यत्र वक्ति क्रियापदम् ॥

So much of the commentary as can be restored may be given here : इदानीं. साम्यसमुल्लासिनो विभूषणवर्गस्य विन्यासविच्छित्तिं विचारयति—विवक्षितेत्यादि । यत्र यस्य(ं) वस्तुनः प्रस्तावाधिकृतस्य केनचिदप्रस्तुतेन पदार्थान्तरेण साम्यं सादृश्यं सोपमा उपमालङ्कृतिरूपमित्युच्यते[1] । किमर्थमप्रस्तुतेन साम्यमित्याह—विवक्षितपरिस्पन्दमनोहारित्वसिद्धये । विवक्षितो वक्तुमभिप्रेतो योऽसौ परिस्पन्दः कश्चिदेव धर्मविशेषस्तस्य मनोहारित्वं हृदयरञ्जकत्वं तस्य सिद्धिर्निष्पत्तिस्तदर्थम् । कीदृशेन पदार्थान्तरेण[2]—तदुत्कर्षवता । तदिति मनोहारित्वं परामृश्यते । तस्योत्कर्षः सातिशयत्वं नाम तदुत्कर्षः, स विद्यते यस्य स तथोक्तस्तेन तदुत्कर्षवता । तदिदमत्र तात्पर्यम्—वर्णनीयस्य विवक्षितधर्मसौन्दर्यसिद्ध्यर्थं प्रस्तुतपदार्थधर्मिणो[3] वा साम्यं युक्तियुक्ततामर्हति । धर्मेणेति नोक्तं केवलस्य तस्यासम्भवात् । तदेवमयं धर्मद्वारको धर्मिणोरुपमानोपमेयलक्षणयोः फलतः साम्यसमुच्चयः पर्यवस्यति । अस्याम् (?) एवंविधामुपमां कः प्रतिपादयतीत्याह—क्रियापदमित्यादि[4] । क्रियापदं धात्वर्थः । वाच्यवाचकसामान्यमात्रमत्राभिप्रेतम्, न पुनराख्यातपदमेव । यस्मादमुख्यभावे-

---

(1) सोपा॰ (for उपमा) in Ms. (2) कीदृशी नवव्यर्थान्तरेण in Ms. (3) प्रस्तुतं in Ms. (4) ॰त्यादौ Ms.

नापि[1] यत्र क्रिया वर्तते तदप्युपमावाचकमेव।......तदेवमुभयरूपमपि क्रियापरिस्पन्द(:)[2]......तामुपमां वक्त्यभिधत्ते। कथम्—विच्छित्त्या, वैदग्ध्यभङ्ग्या। विच्छित्तिविरहेणाभिधानेन तद्विदाह्लादकत्वं न सम्भवतीति भावः। तावत् क्रियापदं न केवलं तां[3] वक्ति यावद् इवादिः[4] इवप्रभृतिरपि। तत्समर्पणसामर्थ्यसमन्वितो यः कश्चिदेव शब्दविशेषः प्रत्ययोऽपि समासो बहुव्रीह्यादिः[5]......विच्छित्त्या तां वक्तीत्यपिः समुच्चये। कस्मिन् सति—साधारणधर्मोक्तौ। साधारणः समानो यो साध्योपमानोपमेययोरुभयोरनुयायिनो धर्मः[6]...। कुत्र[7]—वाक्यार्थं वा। परस्परान्वयसम्बन्धेन पदसमूहो वाक्यं तदभिधेयं वा वस्तु, विभूष्यत्वेन विषयगोचरं तस्याः[8]। कथम्—तदन्वयात्। तदिति पदार्थपरामर्शः। तेषां पदार्थानां समन्वयाद् अन्योन्यमभिसम्बन्धत्वात्। वाक्ये बहवः पदार्थाः सम्भवन्ति, तत्र परस्पराभिसम्बन्धमाहात्म्यात्।

Then he goes on to distinguish the sphere of this figure from that of *utprekṣā* by a half-*kārikā* as follows: तदेवं तुल्येऽस्मिन् वस्तुसाम्ये सत्युपमोत्प्रेक्षावस्तुनोः पृथक्त्वम् इत्याह—

उत्प्रेक्षावस्तुसाम्येऽपि तात्पर्यगोचरो मतः।

The phrase तात्पर्यगोचरो (which alone can be

(1) ०भावो नापि Ms. (2) The text is corrupt here and reads क्रियापरिस्पन्दस्पन्दोवदतामुपमां etc. (3) केवलतां Ms. (4) यावदेवादिः Ms. (5) The text is corrupt here. The whole passage from तदेवमुभयरूपमपि to साध्योपमानोपमेययोः is repeated in the Ms, and the text is neither consistent nor correct. (6) The text reads उभयोरनुयायिनः धर्मान्वययोः क्रिययोः कर्तृभेदेन सुवन्तस्योपमा. (7) तत: in Ms. (8) विषयो गोचरः परस्याः in Ms.

rescued from the corrupt text ) is explained as तात्पर्यं पदार्थव्यतिरिक्तवृत्ति वाक्यार्थजीवितभूतं वस्त्वन्तरमेव गोचरो विषयस्तद्विदामन्तःप्रतिभासः। As an instance of उपमा due to असुख्यक्रियापदपदार्थ, the following verse is given :

पूर्णेन्दोस्तव[1] संवादि वदनं वनजेक्षणे।
पुष्णाति पुष्पचापस्य जगत्त्रयजिगीषुताम्॥

Then, इवादिप्रतिपाद्यपदार्थोपमोदाहरणम्। यथा

निपीयमानस्तबका शिलीमुखैः ( already cited p. 73 )

इत्यादि। आख्यातपदप्रतिपाद्यपदार्थोपमोदाहरणम्, यथा

ततोऽरुणपरिस्पन्द ( already cited p. 11 )

इत्यादि। तथाविधत्वाद्वाक्योपमोदाहरणम्, यथा,

मुखेन सा केतकपत्रपाण्डुना कृशाङ्गयष्टिः परिमेयभूषणा।
स्थिताल्पतारां तरुणेन्दुमण्डलां विभातकल्पां रजनीं व्यडम्बयत्[2]॥

इत्यादि। अप्रतिपाद्यपदार्थोदाहरणम्, यथा

चुम्बत्कपोलतलमुत्पलकं प्रियायाः
स्पर्शोल्लसन्नयनमामुकुलीचकार।
आविर्भवन्मधुरनिद्रमिवारविन्द-
(मिन्दस्पृशास्त)[3]मितमुत्पलमुत्पलिन्याः॥

तथाविधवाक्योपमोदाहरणम्, यथा

पाण्ड्योऽयमंसार्पितलम्बहारः etc. ( *Raghu*° vi, 60 ).

After discussing these examples, he says : आदिग्रहणाद् इवादिव्यतिरिक्तेनापि तथादिशब्दोत्तरेणोपमाप्रतीतिर्भवतीति.

---

(1) पूर्णंदो० Ms. (2) विडम्बयत् in Ms. (3) मिन्दस्पृश Ms. Our emendation is conjectural.

The following is probably an example of the figure as involving *samāsa* :

पूर्णेन्दुकान्तिवदना नीलोत्पलविलोचना ।

Then the verse यान्त्या मुहुर्वलितकन्धरमाननं from *Mālatīmādhava* i, 28, माच्छिष्टीकृतपट्टसूत्रसदृशः from *Bāla-rāmāyaṇa* iii, 10, रामेण मुग्धमनसा वृषभध्वजस्य from *Bāla-rāmāyaṇa* iii,80, and महौस्तः पुत्रवतोऽपि दृष्टिः from *Kumāra*° i, 27 are cited. In the last of these verses Kuntaka admits that there is अर्थान्तरन्यासभ्रान्ति. There are two other verses, इत्याकर्णितकालनेमिवच(नो) and इतोद-माकर्ण्य तपस्विकन्या, which cannot be restored.

The figure *prativastūpamā.*

Kuntaka considers the question as to whether it is necessary to regard प्रतिवस्तूपमा as a separate figure or include it in *upamā* : समासवस्तुन्यासोपनिबन्धनं प्रतिवस्तूपमापि न पृथग् वक्तव्यतामर्हति, पूर्वोदाहरणेनैव समानयोगक्षेमत्वात्. Then citing Bhāmaha's definition and example of *prativastūpamā* (ii, 34 and 36 respectively ), he remarks :

कियन्तः सन्ति गुणिनः साधुसाधारणप्रियाः ।
स्वादुचारुफला नम्राः कियन्तो वाध्वशाखिनः ॥

(Bhāmaha ii, 36)

अत्र समानविलसितानामुभयेषामपि कविविवक्षितविरलत्वलक्षणसाम्य-व्यतिरेकि[न] किञ्चिदन्यमनोहारि जीवितमतिरिच्यमानमुपलभ्यते ।

Kuntaka, however, would in the same way regard उपमेयोपमा and तुल्ययोगिता as figures not separate

but included in *upamā*. He proceeds : तदेवं प्रतिवस्तूपमायाः प्रतीयमानोपमायामन्तर्भावोपपत्त्यौ सत्यामिदानीमुपमेयोपमादेरुपमायामन्तर्भावो विचार्यते. He says[1] that *upameyópamā* is nothing different ( सामान्या, न व्यतिरिक्ता ) from *upamā*, on the ground लक्षणानन्यथास्थितेः (explained as तत्स्वरूपाभिधानं लक्षणं तस्यानन्यथास्थितेः अतिरिक्तभावेन नावस्थानात् ), for here only the उपमेय and उपमान become respectively उपमान and उपमेय. Similar remarks, he says, apply to *tulyayogitā* ( सा भवत्युपमितिः स्फुटम्[2]), because of the साम्यातिरेक between the two objects, each of which is मुख्यतया वर्णनीयं वस्तु. The examples given of *tulyayogitā* are जनस्य साकेतनिवासिनस्तौ from *Raghu*° v, 31 and उभौ यदि व्योम्नि from *Śiśu*° iii, 8. In the same way, Kuntaka thinks that the *ananvaya*, in which there is a काल्पनिक उपमान, does not require a separate definition. The verse cited as an illustration of the figure is corrupt in the Ms, but may be restored as follows :

The figures *ananvaya* and *tulyayogitā*.

तत्पूर्वानुभवे भवन्ति लघवो भावाः शशाङ्कादय-
स्तद्वक्त्रोपमितेः परं परिणमेच्चेतो रसायाम्बुजात्[3] ।
एवं निश्चिनुते मनस्तव मुखं सौन्दर्यसारावधि
बध्ना[ति] व्यवसायमेतुमुपमोत्कर्षं[4] स्वकान्त्या[5] स्वयम् ॥

---

(1) The कारिकाs on these two figures I have not been able to restore from the वृत्ति. (2) This appears to be a fragment of the missing कारिका. (3) चेतारसाभृभवत Ms. (4) ०मुपमाकर्षा Ms. (5) स्वकान्तेः Ms.

२६

On this Kuntaka remarks : तदेवमभिधावैचित्र्यप्रकाराणामेवंविधं वैश्वरूप्यम्, न पुनर्लक्षणभेदानाम्। In this connexion he quotes Bhāmaha's definition and illustration of *tulyayogitā* (iii, 26, 27). It is noteworthy that the verse शेषो हिमगिरिस्त्वं च, which Bhāmaha gives as an illustration of the figure and which Kuntaka criticises, is also quoted in *Dhvanyāloka* iv, 4 (p. 236). Kuntaka explains that with Bhāmaha's definition also, the *tulyayogitā* falls within the province of *upamā* (उक्तलक्षणे तावदुपमान्तर्भावस्तुल्ययोगितायाः).

The figure *nidarśana*, in Kuntaka's opinion, may similarly be included in *upamā* : निदर्शनमप्येवंप्रायमेव. He quotes and discusses an instance of it running as follows :

The figure *nidars'una.*

यैर्वा दृष्टा न वा दृष्टा[1] मुषिताः सममेव ते।
हृतं हृदयमेतेषामन्येषां चक्षुषः फलम्[2] ॥

He also quotes only two lines of a *śloka*

यत्काव्यार्थनिरूपणं प्रियकथालापा रहोऽवस्थितिः
कण्ठान्तं मृदुगीतमाहतसुहृद्दुःखान्तरावेदनम्[3] ।

---

(1) The reading here is corrupt in Ms. (2) सुभाषितावलि 1254 (शुक्रदेवस्य) = शार्ङ्गधरपद्धति 3368 (प्रभाकरदेवस्य) = सूक्तिमुक्तावलि P. 65b (प्रभाकरदेवस्य) = सदुक्तिकर्णामृत ii, 494 (कस्यचित्) = Hemacandra, वृत्ति p. 256 (anon) = कवीन्द्रवचन० 248 (anon). (3) ०वेषनम् Ms.

as well as Bhāmaha's definition and illustration (ताम्बूलरागवलयं) of *ananvaya*, iii 44-45. The comment which follows is corrupt and difficult to reconstruct. Then comes the quotation तद्वल्गुना युगपदुन्मिषितेन तावत् from *Raghu*° v, 68, and another corrupt verse, beginning with हेलावभग्नहरकार्मुक एष सोऽपि. probably from some lost Rāma-drama.

The figure *parivṛtti*

Taking up the figure *parivṛtti* after this, Kuntaka says : परिवृत्तिरप्यनेन न्यायेन पृथङ् नास्तीति निरूप्यते. In his opinion, it is, like the figures discussed above, nothing more than a variety of *upamā* ; because in it, the two objects are each described principally and the साम्यप्रतीति is clear. The missing *kārikā* on this and its *vṛtti*, reconstructed, would run thus :

विनिवर्तनमेकस्य यत्तदन्यस्य वर्तनम् ।
न परिवर्तमानत्वादुभयोरत्र(?) पूर्ववत् ॥

तदेवं परिवृत्तेरलङ्करणत्वमयुक्तमित्याह—विनिवर्तमित्यादि । यदेकस्य पदार्थस्य विनिवर्तनम् अकारणं (?) तदन्यस्य तद्व्यतिरिक्तस्य परस्य वर्तनं तदुपनिबन्धनम् । तदलङ्करणं न भवति । कस्मात्—उभयोः परिवर्तमानत्वात् मुख्येनाभिधीयमानत्वात् । कथम्—पूर्ववत्, यथापूर्वम् । प्रत्येकं प्राधान्यान्नियमानिस्थितेश्च न क्वचित् कस्यचिदलङ्करणम् । तद्वदिहापि न च तावन्मात्ररूपतया तयोः परस्परविभूषणभावः, प्राधान्ये निवर्तनप्रसङ्गात् । रूपान्तरनिरोधेषु पुनः साम्यसद्भावे भवत्युपमितिरेषा चालङ्कृतिः समुचिता । उपमा पूर्ववदेव । यथा—

सदयं[1] (भीम)भुजे महीभुजः
सहसोद्वेगमियं व्रजेदिति ।
अभिरोपयति स्म[2] स मेदिनीं
नवपाणिग्रहणां वधूमिव ॥

He distinguishes several kinds of *parivṛtti*, e. g. the kinds in which there is विषयान्तरपरिवर्तन or in which there is धर्मान्तरपरिवर्तन. Of the first variety, the illustration is

स्वल्पं जल्प बृहस्पते सुरगुरो नैषा सभा वज्रिणः ।

and *Kumāra*⁰ v, 11 ( विसृष्टरागादधरान्निवर्तितः ) is cited as an example of the second variety. On this verse Kuntaka remarks : अत्र गौर्याः करकमललक्षणो धर्मः परिवर्तितः । क्वचिदेकस्यैव धर्मिणः समुचितस्वसंवेदिधर्मावकाशे धर्मान्तरं परिवर्तते । [ यथा—ध्रुतं ] त्वया वार्द्धकशोभि वल्कलम् ( *Kumāra*⁰ v, 44 ) । क्वचिद् बहूनामपि धर्मिणां परिस्पर्धिनां पूर्वोक्ताः सर्वे विपरिवर्तन्ते । तथा च लक्षणकारेण[3] तैवोदाहरणं दर्शितम्, यथा

(शस्त्र)प्रहारं ददता भुजेन तव भूभुज(ाम्) ।
चिरार्जितं हृतं तेषां यशः कुमुदपाण्डुरम् ॥ (Daṇḍin ii, 356).

Kuntaka quotes *Raghu*⁰ i, 95 ( निर्दिष्टां कुलपतिना ) and discusses whether this is a case where the परिवर्तनीय पदार्थान्तर is प्रतीयमान ।

(1) सेदय Ms. (2) अभिरोपमता Ms. (3) Kuntaka means दण्डिन् whom he quotes.

From this point, the Ms is hopelessly corrupt, and no consistent or intelligible account can be given of Kuntaka's concluding remarks on this subject. He appears, however, to quote and discuss Bhāmaha's definition and illustration (iii, 32, 33 अयं मन्दद्युतिर्भास्वान्) of the figure *nidarśanā* ; and apparently this is taken up by the rest of the *vṛtti* on this topic. In the course of the discussion, *Raghu*° iv, 66 ( ततः प्रतस्थे कौवेरीं ) and *Kirāta*° iii, 25 ( निर्याय विद्याथ ) are quoted.

The figure *ślesa.*

It is a matter of great regret that Kuntaka's treatment of an important figure like *śleṣa*, which is next taken up, cannot be reconstructed from the Ms, nor can even a cursory account of it given : for the Ms is very corrupt, fragmentary and entirely unintelligible here. It appears, however, that Kuntaka classifies *śleṣa* into three varieties, although the exact nomenclature or characteristics of the three varieties are not clear. He probably follows Udbhaṭa in accepting *śleṣa* as relating *artha*, *śabda* or *śabdârtha*, and this may be the basis of his classification. Of the first variety the illustration given is

स्वाभिप्रायसमर्पणप्रवणया माधुर्यमुद्राङ्कया[1]

(1) मुद्राजता Ms ( but marked in transcript as corrupt).

विच्छित्त्या हृदयेऽभिजातमनसामन्तः किमप्युल्लिखत्[1] ।
आरूढं रसवासनापरिणत[:] काष्ठां[2] कवीनां परं[3]
कान्तानां च विलोकितं विजयते वैदग्ध्यवक्रं वचः ॥

The example of the second variety is the very well-known verse येन ध्वस्तमनोभवेन बलिजित्कायः quoted by most Ālaṃkārikas from Ānandavardhana (p. 95) downwards[4]. It is regrettable that the apparently fine verse, which is given as an example of the third variety, is corrupt in the Ms and cannot be reconstructed satisfactorily as the last line is defective. It may be given thus :

मालामुत्पलकन्दलैः प्रतिकचं स्वायोजितां[5] बिभ्रती
नेत्रेणासमदृष्टिपातसुभगेनोद्दीपयन्ती स्मरम् ।
काञ्चीदामनिबद्धभङ्गि[6] दधती व्यालं विना वाससा
मूर्तिः कामरिपोः सिताम्बरधरा पायाच्च कामस्त्रियः[7] ॥

After this, the verse दृष्ट्या केशव गोपरागहृतया (already

(1) किमप्युल्लिखन् Ms. (2) काष्ठा Ms. (3) तरं Ms. (4) काव्यमीमांसा p. 88 = व्यक्तिविवेक p. 94 = काव्यप्रकाश p. 419 = रुय्यक p. 96 = हेमचन्द्र p. 159 = विश्वनाथ p. 461 = सुभाषितावलि 44 (anon). Jhalakikara in his commentary on काव्यप्रकाश attributes it to Candraka. (5) प्रतिकचारायोजितां Ms. (6) The syllables are marked as corrupt in the Ms and read संङ्ग. In the case of रति, construe as निबद्धभङ्गि काञ्चीदाम दधती ; in the other case, काञ्चीदामनिबद्धभङ्गि व्यालं दधती. Again, construe in the one case as व्यालम्बिना ; in the other, व्यालं विना. (7) This line is extremely corrupt after कामरिपोः and reads सिताम्बकधरा पायावागजगं. In the case of कामरिपोः मूर्तिं it should be split up as सिता and अम्बरधरा.

cited in *Dhvanyâloka* p. 98 )[1] is quoted as an example of असत्यभूतश्लेष, although the exact signification of the term cannot be determined from the Ms.

Kuntaka then passes on to the figure *vyatireka*, the *kārikā* on which may be conjecturally reconstructed thus :

The figure *vyatireka*.

सति तच्छब्दवाच्यत्वे धर्मसाम्येऽन्यथास्थितेः ।
व्यतिरेचनमन्यस्मात् प्रस्तुतोत्कर्षसिद्धये ॥
शाब्दः प्रतीयमानो वा व्यतिरेकोऽभिधीयते ॥

The comment on this runs thus : एवं श्लेषमभिधाय साम्यैकनिबन्धनत्वाद् उक्तरूप[2]श्लेषकारणं व्यतिरेकमभिधत्ते—सतीत्यादि। तच्छब्दवाच्यत्वे, स चासौ शब्दश्चेति विग्रह्य। तच्छब्दशक्त्या श्लेषनिमित्तभूतः शब्दः परामृश्यते। तस्य वाच्यत्वेऽभिधेयत्वे सति विद्यमाने। धर्मसाम्ये सत्यपि परस्परसान्दसादृश्ये[3] विद्यमाने ......[4] तथाविधशब्दवाच्यत्वस्य धर्मसाम्यस्य चोभयनिष्ठत्वादुभययोः प्रकृतत्वात्। प्रस्तुताप्रस्तुतयोरेव तयोर्धर्माद् एकस्य यथारुचि केनापि[5] विवक्षि(तपदार्थान्त)रेण अन्यथास्थितेरतथाभावेनावस्थितेः[6] व्यतिरेचनं पृथक्करणम्। [कस्मात्—] अन्यस्माद्। उपमेयस्योपमानादुपमानस्य[7] वा तस्मात्। स व्यतिरेकनामालङ्कारोऽभिधीयते कथ्यते। किमर्थम्—प्रस्तुतोत्कर्षसिद्धये[8]। प्रस्तुतस्य वर्ण्यमानस्य वृत्तेश्छायातिशयनिष्पत्तये। स च द्विविधः सम्भवति—शाब्दः प्रतीयमानो वा। शाब्दः कविप्रवाहप्रसिद्धः, तत्समर्पणसमर्था[9]भिधानेना[भि]धीयमानः। प्रतीयमानो वाक्यार्थसामर्थ्यमात्रावबोध्यः।

(1) Also quoted by विश्वनाथ p. 234. (2) उपह्रपक Ms. (3) ॰सादृश्याद Ms. (4) A *lacuna* is marked here. (5) यथारुचकेनापि Ms. (6) ॰नावस्थिता Ms. (7) ॰दुपमानं Ms. (8) ॰त्कर्षप्रसिद्धयी: Ms. (9) ॰समर्था Ms.

Of the three illustrative verses (one Prakrit and two Sanskrit), unfortunately two are too corrupt and fragmentary to be given here. The third, which also is fragmentary in our Ms, appears to be the same as the verse प्राप्तश्रीरेष कस्मात् cited in *Dhvanyâloka* p. 109. In his comment on the last of these verses, which Kuntaka regards apparently as प्रतीयमानव्यतिरेक but which earlier writers would regard as *pratīyamāna rūpaka* (तत्त्वाध्यारोपणात् प्रतीयमानतया रूपकमेव पूर्वसूरिभिराम्नातम्), Kuntaka cites *Dhvanyâloka* i, 13 (the Dhvanikāra's definition of *dhvani-kāvya*) and discusses the meaning of प्रतीयमानता in this connexion. This is followed by an example of श्लेषव्यतिरेक, illustrated by the verse श्लाघ्याशेषतनुं सुदर्शनकरः (*Dhvanyâloka*, p. 96).

A third variety of *vyatireka* is mentioned, of which the missing *kārikā* would probably read as follows :

लोकप्रसिद्धसामान्यपरिस्पन्दाद्विशेषतः ।
व्यतिरेको यदेकस्य स परस्तद्विवक्षया ॥

The commentary explains : अस्यैव प्रकारान्तरमाह—लोकप्रसिद्धेत्यादि । परोऽन्यः स[1] व्यतिरेकालङ्कारः । कीदृशः—यदेकस्य वस्तुनः कस्या[पि] व्यतिरेकः पृथक्करणम् । कस्मात्[2]—लोकप्रसिद्धसामान्यपरिस्पन्दात् । लोकप्रसिद्धो जगत्प्रतीतः सामान्यभूतः सर्वसाधारणो यः परिस्पन्दो व्यापारस्तस्मात् । कुतो हेतोः—विशेषतः,

(1) परेन्याय Ms. (2) यस्मात् Ms.

कुतश्चिदतिशयात्। कथम्—तद्विवक्षया[1]। 'तद्' इत्युपमादीनां परमार्थस्तेषां विवक्षया। तद्विवक्षितत्वेन[2] विहितः। The illustration given of this variety is unfortunately fragmentary :

चापं पुष्पितभू(तलं सुरचिता) मौर्वी द्विरेफावलिः
पूर्णेन्दोरुदयोऽभियोग[3]समयः पुष्पाकरोऽप्यासरः[4]।
शस्त्राण्युत्पलकेतकोसुमनसो योग्यात्मनः कामिनां
त्रैलोक्ये (मदनस्य सापि ल)लितोल्लेखा जिगीषाग्रहः॥

अत्र सकललोकप्रसिद्धशस्त्राद्युपकरणकलापाच्च जिगीषाव्यवहारान्मन्मथः सुकुमारोपकरणत्वाज्जिगीषा……। ननु च भूतलादीनां चापादिरूपणाद्रूपकव्यतिरेक[5] एवायम्। नैतदस्ति ; रूपकव्यतिरेके हि रूपणं विधाय तस्मादेव व्यतिरेचनं विधीयते। एतस्मिन् पुनः सकललोकप्रसिद्धात्सामान्यव्यव[हार]तात्पर्या[द्] व्यतिरेचनम्। भूतलादीनां चापादि[6]रूपणं विशेषान्तरनिमित्तमात्रमवधार्यताम्।

After dealing with the figure *virodha*[7] which, in his opinion, generally involves *ślesa* ( श्लेषेणाभिसंभिन्नत्वात् ), Kuntaka passes on to the figure *samāsôkti*, which he refuses to accept as an independent figure, as it lacks the

The figure *samāsokti*.

(1) तद्विवक्षायां Ms. (2) तान्यविवक्षितत्वायां Ms. (3) ०रुदयाभियोग Ms. (4) The word आसरः may be interpreted as आ समन्तात् सरति यः सः, meaning something like अग्रेसरः ; for वसन्त is often described as such in relation to मदन : but it is probable that the author meant आसार ( = सुहृद्बल), metrically shortened. (5) रूपकाद्व्यतिरेक Ms. (6) भावादि Ms. (7) The कारिका on this figure as well as on समासोक्ति are difficult to reconstruct from the corrupt वृत्ति on this topic.

requisite charm of a poetic figure ( अलङ्कारान्तरत्वेन शोभाशून्यतया). In this connexion he discusses Bhāmaha's definition and illustration ( ii, 79-80 ) of this figure, citing Bhāmaha's illustrative verse

स्कन्धवानृजुरव्यालः स्थिरोऽनेकमहाफलः ।
जातस्तरुरयं चोच्चैः पातितश्च नभस्वता[1] ॥

Kuntaka remarks : अत्र तरोर्महापुरुषस्य च द्वयोरपि[2] मुख्यत्वे महापुरुषपक्षे विशेषणानि सन्तीति विशेष्यविधायकं पदान्तरमभिधातव्यम् । यदि[3] वा विशेषणेऽन्यथानुपपत्त्या प्रतीयमानतया विशेष्यं परिकल्प्यते तदेवंविधस्य कल्पनस्य स्फुरितं न किञ्चिदिति स्फुटमेव शोभाशून्यता. Kuntaka then quotes and discusses the well known verse अनुरागवती सन्ध्या ( already quoted in *Dhvanyâloka* p. 37 ) which, in the opinion of Bhāmaha,[4] contains the figure *samāsôkti*.

The figure *sahokti*.

Passing on to the figure *sahôkti*, Kuntaka cites, discusses and rejects Bhāmaha's definition and illustration ( iii 38, 39 ) of that figure. He considers the figure in Bhāmaha's illustrative verse हिमपाताविलदिशः to be nothing more than *upamā* ( अत्र परस्परसाम्यसमन्वयो मनोहारिनिबन्धनमित्युपमैव ). He defines *sahôkti* as follows ( the *kārikā* conjecturally reconstructed ) :

---

(1) This श्लोक is quoted in a very corrupt form in the Ms. (2) बन्धयोरपि Ms. (3) यथा Ms. (4) See Abhinavagupta's remarks on this verse in *Locana*, at p. 37 ; but there is nothing in the text of भामह regarding this verse.

यत्रैकेनैव वाक्येन वर्णनीयार्थसिद्धये ।
अर्थानां युगपद्युक्तिः सा सहोक्तिः सतां मता ॥

This is explained thus: प्रमाणोपपन्नमभिधत्ते तत्र सहोक्तेस्तावत्[1]—यत्रेत्यादि । सा सहोक्तिरलङ्कृतिर्मता प्रतिभाता सतां तद्विदां समाम्नातेत्यर्थः[2] । कीदृशी—यत्र यस्याम् एकेनैव वाक्येनाभिन्नेनैव पदसमूहेन[3] अर्थानां वाक्यार्थतात्पर्यभूतानां वस्तूनां युगपत्तुल्यकालमुक्तिरभिहितिः[4] । किमर्थम्—वर्णनीयार्थसिद्धये । वर्णनीयस्य प्रधानत्वेन विवक्षितस्यार्थस्य वस्तुनः सम्पत्तये[5] । तदिदमुक्तं भवति—यत्र वाक्यान्तरवक्तव्यमपि वस्तु प्रस्तुतार्थनिष्पत्तये विच्छित्त्या तेनैव वाक्येनाभिधीयते । यथा

हे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम् ।
रामस्य पाणिरसि निर्भरगर्भखिन्न-
देवीप्रवासनपटोः करुणा कुतस्ते ॥

(उत्तररामचरित २।१०)

The other three examples of this figure given by Kuntaka are *Kirata*[0] ix, 39-40 (उच्यतां स वचनीयमशेषं and किं गतेन न हि युक्तमुपैतुम्) and

सर्वक्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी ।
रामा रम्ये वनोद्देशे मया विरहिता त्वया ॥

(विक्रमोर्वशीय)

On this last verse, the comment is: अत्र प्रधानभूतविप्रलम्भशृङ्गाररसपरिपोषण(सिद्ध)ये वाक्यार्थद्वयमुपनिबद्धम् ।

---

(1) सहोक्तेस्तावत् Ms. (2) समानमित्यर्थः Ms. (3) तद० Ms. (4) ०मुक्तिभिरभिहितः Ms. (5) संपन्नम् Ms.

Kuntaka then raises the question, viz., that if in *sahókti* more than one sense is involved, why should not there be श्लेषानुप्रवेशः in such cases ? This portion of the *vṛtti* is unfortunately corrupt, but the general sense is pretty clear :

ननु चानेकार्थसम्भवेऽत्र श्लेषानुप्रवेशः कथं न सम्भवतीत्यभिधीयते—तत्र यस्माद् द्वयोरेकतरस्य वा मुख्यभावे श्लेषे......[1] तस्मिन् पुनस्तथाविधभावात्। बहूनां द्वयोर्वा सर्वेषामेव गुणभावः प्रधानार्थपरत्वेनावसानात्। अन्यच्च, तस्मिन्नेकेनैव[2] शब्देन युगपत्प्रदीपप्रकाशवदर्थद्वयप्रकाशनं शब्दार्थद्वयप्रकाशनं वेति शब्दस्तत्र सामान्याय[3] विजृम्भते। सहोक्तेः पुनस्तथाविधस्याङ्गाभावादेकेनैव वाक्येन पुनः पुनरावर्तमानतया वस्त्वन्तरप्रकाशनं विधीयते। तस्मादावृत्तिरत्र शब्दन्याय्यतां प्रतिपद्यते। 'सर्वक्षितिभृतां नाथ' इत्यत्र वाक्यैकदेशे श्लेषानुप्रवेशः सम्भवतीत्युच्यते—......[4]। अत्र वाक्यैकदेशे श्लेषस्याङ्गत्वम्, मुख्यभावः पुनः सहोक्तेरेव। तदेवमावृत्त्य[5] वस्त्वन्तरावगतौ सहोक्तेः सहभावाभावादर्थान्वये परिहाणिः प्रसज्येत। नैतदस्तीति। यस्मात् सहोक्तिरित्युक्तम्, न पुनः सहप्रतिपत्तिरिति। तेनात्यन्तसहाभिधानमेव प्रतिपन्नोत्कर्षावगतिरिति[6] न किञ्चिदसम्बद्धम्।

केश्चिदेषा समासोक्तिः सहोक्तिः कैश्चिदुच्यते।
अर्थान्वयाच्च[7] विद्वद्भिरन्यैरन्यत्वमेतयोः॥

---

(1) *Lacuna* marked in Ms. (2) तस्मिन् here probably refers to ०श्लेष (3) सामान्या यत्र Ms. (4) The Ms is corrupt here and reads: यथा हि कश्चिद्दोषः तस्मादलङ्करणमलङ्करणान्तरं क्वचिदङ्गभावं न जनयतीति,—which gives no consistent sense. (5) सावृत्य Ms. (6) प्रतिपन्नोढं कर्मावगतेरिति Ms. (7) ० न्वया स Ms.

This is followed by a brief treatment of the figure *dṛṣṭānta*, of which the missing *kārikā* may be partly given as follows :

The figure *dṛstānta*

वस्तुसाम्यं समाश्रित्य यदन्यस्य प्रदर्शनम् ।

explained as : दृष्टान्तं तावदभिधत्ते—वस्तुसाम्येत्यादि । यदन्यस्य वर्ण्य[मान]प्रस्तुताद्व्यतिरिक्तवृत्तेः पदार्थान्तरस्य प्रदर्शन[1]मुपनिबन्धनं स दृष्टान्तनामालङ्कारोऽभिधीयते । कथम्—वस्तुसाम्यं समाश्रित्य । वस्तुनः पदार्थयोर्दृष्टान्तदार्ष्टान्तिकयोः साम्यं सादृश्यं समाश्रित्य निमित्तीकृत्य । लिङ्गसंख्याविभक्तिस्वरूपसाम्यवर्जितमिति वस्तुग्रहणम् । The example given consists of the first three lines of the verse सरसिजमनुविद्धं from *Abhijñāna-śakuntala* i, 20. ( पादत्रयमेवोदाहरणम्, चतुर्थे भूषणान्तरसम्भवात् ).

The figure *arthântara-nyāsa* is next taken up, of which the missing *kārikā* may be conjecturally restored thus :

The figure *arthāntara-nyāsa*

वाक्यार्थान्तरविन्यासो मुख्यतात्पर्यसाम्यतः ।
ज्ञेयः सोऽर्थान्तरन्यासः यः समर्पकतयाहितः ॥

The explanation is as follows : अर्थान्तरन्यासमभिधत्ते—वाक्यार्थेत्यादि । ज्ञेयः सोऽर्थान्तरन्यासः [अर्थान्तरन्यास]नामालङ्कारो ज्ञेयः परिज्ञातः । क—यः वाक्यार्थान्तरविन्यासः । परस्परान्वितपदसमुदायाभिधेयवस्तु वाक्यार्थः, तस्मादन्यत्[2] प्रकृतत्वात् प्रस्तुतव्यतिरेकि[3] वाक्यार्थान्तरम्, तस्य[4] विन्यासो विशिष्टं न्यसनं[5] तद्विदाह्लादकारितयोपनिबन्धः[6] । कस्मात्[7] कारणात्—

(1) पदार्थान्तरस्यापदर्शनं Ms. (2) तस्मादन्यत Ms. (3) ०व्यति०कि Ms. (4) न्यस्य Ms. (5) नसङ्गतं Ms. (6) ०निबद्धः Ms. (7) तस्मात् Ms.

मुख्य[1]तात्पर्यसाम्यतः[2] । मुख्यं प्रस्तावाधिकृतत्वात् प्रधानभूतं वस्तु, तस्य तात्पर्यं यत्परत्वेन......[3] तस्य साम्यतः[4] सादृश्यात् । कथम्—समर्पकतया[5]हितः । समर्पकत्वेनोपनिबद्धः, तत्तदुपपत्तियोजनेनेति[6] यावत् । The examples given consist of the last line of the verse सरसिजमनुविद्धं already quoted from *Śakuntalā*, and the verse असंशयं क्षत्रपरिग्रहक्षमा from the same drama ( i, 22 ).

The figure *ākṣepa*

The *kārikā* on the figure *ākṣepa*, which is next dealt with, may be given thus :

निषेधच्छाययाक्षेपः कान्तिं प्रथयितुं पराम् ।
आक्षेप इति स ज्ञेयः प्रस्तुतस्यैव वस्तुनः ॥

Explained as : आक्षेपमभिधत्ते—निषेधच्छाययेत्यादि । आक्षेप इति स ज्ञेयः सोऽयमाक्षेपालङ्कारो ज्ञातव्यः । स[7] कीदृशः—प्रस्तुतस्यैव वस्तुनः प्रकृतस्यैवार्थस्य आक्षेपः क्षेपकृत्[8] । अभिप्रेतस्यापि निर्वर्तनमिति[9] । कथम्—निषेधच्छायया प्रतिषेधविच्छित्त्या । किमर्थम्—कान्तिं प्रथयितुं पराम् उपशोभां प्रकटयितुं प्रकृष्टाम् । The illustration given is a Prakrit verse which is hopelessly corrupt and unintelligible in the Ms.

Minor poetic figures. *vibhāvanā*

Having dealt with all the important poetic figures, Kuntaka now concludes the chapter with some general remarks on the subject, incidentally discussing

(1) मुख्ये Ms. (2) साद्यतो Ms. (3) The Ms is hopelessly corrupt here and reads : यत्परत्वेन तद्गमन्तं. (4) तस्मात् साम्यात् Ms (5) यथा for °तया Ms. (6) तुतदुपपत्तियोजनतेनेति Ms. (7) यः Ms. (8) Ms reads प्राकृतस्येतार्थस्यक्षपकृत्. (9) निवर्तनमिति Ms.

minor figures. The figure *vibhāvanā* is first dealt with. The *kārikā* may be reconstructed thus :

वर्णनीयस्य केनापि विशेषेण विभावना।
स्वकारणपरित्यागपूर्वकं कान्तिसिद्धये॥

Explained as follows : एवंस्वरूपं प्रतिषेधवैचित्र्य[1]च्छायातिशयमलङ्करणमभिधाय कारणप्रतिषेधोत्तेजितातिशयमभिधत्ते—स्वकारणेत्यादि। वर्णनीयस्य प्रस्तुतस्यार्थस्य विशेषेण केनाप्यलौकिकेन रूपान्तरेण विभावनेत्यलङ्कृतिरभिधीयते।......[2] कथम्—स्वकारणपरित्यागपूर्वकम्। तस्य विशेषस्य[3] स्वमात्मीयं[4] कारणं[5] यन्निमित्तं[6] [त]स्य परित्यागः प्रहाणं पूर्वं प्रथमं यत्र। तत्कृत्वेत्यर्थः। किमर्थम्—कान्तिसिद्धये[7] शोभा[निष्पत्तये]। तदिदमुक्तं भवति—यथा लोकोत्तरविशेषविशिष्टता वर्णनीयतां नीयते। यथा

असम्भृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः प्रपेदे॥

(कुमार० १।३१)

अत्र कृत्रिमकारणपरित्यागपूर्वकं लोकोत्तरसहजविशेषविशिष्टता कवेरभिप्रेता।

This is followed by a reference to the figure *sasandeha*, the *kārikā* of which is difficult to reconstruct :

The figure *sasandeha.*

यस्मिन्नुत्प्रेक्षितं रूपं सन्देहमेति वस्तुनः (?)।
उत्प्रेक्षान्तरसद्भावाद् विच्छित्त्यै तत्... ॥

(1) ०वैचित्र Ms. (2) The line omitted here, beginning with तदयमत्रार्थः, is corrupt and gives no sense. (3) विनाशेषस्य Ms. (4) स्वमात्मी Ms. (5) करणं Ms. (6) यन्निमित्त Ms. (7) Ms reads कान्तियष्टये which is obviously corrupt : the emendation is conjectural.

The commentary is pretty clear: तदेवमसम्भाव्यकारण-त्वादविभाव्यमानस्वभावतां विचार्य विचारगोचरस्वरूपतया स्वरूप-सन्देहसमर्पितातिशयमभिधत्ते—यस्मिन्नित्यादि[8]। यस्मिन्नलङ्करणे सम्भावनानुमानात् साम्यसमन्वयाच्च स्वरूपान्तरसमारोपद्वारेण[9] उत्-प्रेक्षितं प्रतिभालिखितं रूपं पदार्थपरिस्पन्दलक्षणं सन्देहमेति संशय-मारोहति। कस्मात्कारणात्—उत्प्रेक्षान्तरसद्भावात्। उत्प्रेक्षा-प्रकर्षपरस्यापि तद्विषयस्य सद्भावात्। किमर्थम्—विच्छित्त्यै शोभायै। तदेवंविधमभिधावैचित्र्यं सन्देहाभिधानं[10] वदन्ति। यथा

रञ्जिता नु विविधास्तरुशैला
नामिता नु गगनं स्थगितं नु।
पूरिता नु विषमेषु धरित्री
संहृता नु ककुभस्तिमिरेण॥ (*Kirāta*⁰ ix, 15)

निमीलदाकेकरलोलचक्षुषां (प्रियोपकण्ठं) कृतगात्रवेपथुः।
निमज्जतीनां श्वसितोद्धतस्तनः श्रमो नु तासां मदनो नु पप्रथे॥
(*Kirāta*⁰ viii, 53).

There are two more examples; one in Parkrit, too corrupt and unintelligible, and the other in Sanskrit, which may be given here:

किं सौन्दर्यमहार्थसञ्चितजगत्कोशैकरत्नं[1] विधेः[2]
किं शृङ्गारसरःसरोरुहामदं[3] स्यात् सौकुमार्यावधि।
किं लावण्यपयोनिधेरभिनवं बिम्बं सुधादीधिते-
र्वक्तुं कान्तमाननं[4] तव मया साम्यं न निश्चीयते॥

---

(1) यस्मादित्यादि Ms. (2) See Kuntaka's definition of उत्प्रेक्षा above. (3) सदाद्याभिमानं Ms. (4) ०करत्व' Ms. (5) निधौ Ms. (6) शृङ्गारपरसर··· रुहं Ms. (7) ०माननै Ms.

This figure, in Kuntaka's opinion is only of one kind, being based on *utprekṣā* ( ससन्देहस्यैकविधप्रकारत्वमुत्प्रेक्षामूलत्वात् ).

Then comes the figure *apahnuti*, which is defined as follows (the missing *kārikā* restored conjecturally) :

अन्यदर्पयितुं रूपं वर्णनीयस्य वस्तुनः ।
स्वरूपापह्नवो यस्यामसावपह्नुतिर्मता ॥

Explained as follows : ऐवं स्वरूपसन्देहसुन्दरं ससन्देहमभिधाय स्वरूपापह्नतिरमणीया[1]मपह्नुतिमभिधत्ते—अन्यदित्यादि । पूर्ववदुत्प्रेक्षामूलत्वमेव जीवितमस्याः । सम्भावना[3]-

The figure *apahnuti*.

नुमानात् सादृश्याच्च वर्णनीयस्य वस्तुनः प्रस्तुतस्यार्थस्य अन्यत् किमप्यपूर्वं रूपमर्पयितुं रूपान्तरं [विधातुं] स्वरूपापह्नवः स्वभावापलापः सम्भवति यस्याम्, असौ तथाविध[4]-भणितिरेवापह्नुतिर्मता[5] प्रतिभाता तद्विदाम्[6] । Of the three examples given of this figure, the first ( in *Śārdūla-vikrīḍita* metre ) is exceedingly corrupt and full of lacunae in the Ms ; the second can be given tentatively as follows :

पूर्णेन्दोः परिपोषकान्तिवपुषः स्फारप्रभाभास्वरं
नेदं मण्डलमभ्युदेति गगने भासोज्जिहीर्षोर्जगत्[7] ।
मारस्योच्छ्रितमातपत्रमधुना[8] पाण्डुप्रदोषश्रियो[9]
मानो बन्धुजनाभि[लाष]दलनोऽद्योच्छ्रियते किं न ते[10] ॥

(1) Corrupt in Ms, and reads स्वरूपावत्नावयरमणीय०. (2) जीवितस्यानु Ms. (3) सम्भावनेन Ms. (4) तेषां विध० Ms. (5) मह्ता Ms. (6) तद्विधं Ms. (7) भासो जिहीर्षा जगत् Ms. (8) मारस्योच्छ्तरेतपत्रमधुनो (marked as corrupt), पाण्डुः, Ms. (9) ०श्रियो Ms. (10) ०दलनो द्योच्छ्रे कयाकिनः (marked as corrupt) Ms.

The third example is तव कुसुमशरत्वम् from *Abhijñāna-śakuntala* iii, 55.

*Samsrti* and *Sankara.*

Kuntaka now proceeds to deal with the cases of संसृष्टि and सङ्कर of two or more poetic figures. The *kārikās* cannot be restored, nor is the *vrtti* on them fully intelligible. There are two illustrative verses under the first head, which may by given thus :

आश्लिष्टो नवकुङ्कुमारुणरविव्यालोकितैराश्रितो[1]
लम्बान्ताम्बरया[2] समेत्य भुवने ध्यानान्तरे सन्ध्यया ।
चन्द्रांशूत्करकोरकाकुलमतिध्वान्तद्विरेफोऽधुना[3]
देव्या स्थापितदोहदे[4] कुरवके भाति प्रदोषागमः ॥

The second would read thus :

म्लानिं वान्तविषानलेन[5] नयनव्यापारलब्धात्मना
नीता राजभुजङ्ग पल्लवमृदुर्नूनं[6] लतेयं तथा[7] ।
अस्मिन्नीश्वरशेखरेन्दुकिरणस्मेरस्फलोलाञ्छिते
कैलासोपवने यथा सुगहने नैति प्ररोहं पुनः ॥

The verse cited as an example of सङ्कीर्ण has lost some letters in the first line :

(रूढा जालैर्जटाना)मुरगपतिगणैस्तत्र पातालकुक्षौ
प्रोद्यद्बालाङ्कुरश्रीर्दिशि दिशि दशनैरभिराशागजानाम् ।

(1) ०व्यालोकितैकस्तं Ms. Our emendation is conjectural. (2) लम्बारम्बरया Ms. (3) कुलपतेध्वान्तद्विरेफाधुना Ms. (4) वाप्रितदोहदे Ms. (5) वेमविषानलेन Ms. (6) पल्लवमुद्दुर्नामा Ms. (7) लया Ms.

अस्मिन्नाकाशदेशे विकशितकुसुमा[1] राशिभिस्तारकाणां
नाथ त्वत्कीर्तिवल्ली फलति फलमिदं विम्बमिन्दोः सुराद्रेः ॥

Other examples are निर्मोकमुक्तिरिव [या] गगनोरगस्य already cited[2], and अस्याः सर्गविधौ from *Vikramorśiya* 1, 9 ( already cited p. 140 ).

Other poetic figures.

Having defined and illustrated all the important poetic figures, Kuntaka says that he is not prepared to accept any other figure that may still remain undefined, as independent figures, because they may either be reduced to some figure already defined or because they do not possess the essential charm which is necessary to constitute a poetic figure. He says ( the *kārikā* conjecturally reconstructed ) :

भूषणान्तरभावेन शोभाशून्यतया तथा ।
अलङ्कारास्तु ये केचिन्नालङ्कारतया मनाक् ॥

Explained as : एवं यथोपपत्त्यालङ्कारान् लक्षयित्वा केषाञ्चिद्[3]-लक्षितत्वाल्लक्षणव्याप्तिदोषं परिहर्तुमुपक्रमते—भूषणेत्यादि । ये पूर्वोक्त-व्यतिरिक्ताः केचिदलङ्कारास्तेऽलङ्कारतया मनाङ् न विभूषण-त्वेनाभ्युपगताः । केन हेतुना—भूषणान्तरभावेन । तेभ्यो व्यतिरिक्त-मन्यद् [भूषणं] भूषणान्तरम्, तत्स्वभावत्वेन[4], पूर्वोक्तानामेवान्यतम-त्वेनेत्यर्थः । शोभाशून्यतया तथा—शोभा कान्तिस्तया शून्यं रहितं

---

(1) ०कुरग०, पीतालकुचैः and ०कुसुम in Ms. (2) See above p. 193. (3) केषाविद० Ms. (4) तदावेदनत्वे न Ms.

शोभाशून्यम्, तस्य भावः शोभाशून्यता, तया हेतुभूतया.........[1] तेषामलङ्करणत्वमनुपपन्नम् ।

In this way, he rejects the claim of *yathāsaṃkhya* to be considered as an *alaṃkāra*, although it is so considered by older writers (पूर्वैराम्नातः); and quoting Bhāmaha's example of that figure, he criticises it by saying that it lacks the requisite charm (भणितिवैचित्र्यविरहान्न काचिदत्र कान्तिर्विद्यते)[2]. He finds fault with those who enumerate *āśīḥ* as a figure and remarks: आशिषो लक्षणोदाहरणानि[3] नेह पठ्यन्ते[4], तेषु चाशंसनीयस्यैवार्थस्य मुख्यतया वर्णनीयत्वाद-लङ्कार्यत्वमिति प्रेयोऽलङ्कारोक्तानि दूषणान्यापतन्ति । The case of *viśeṣókti* is the same: विशेषोक्तेरलङ्कारान्तरभावेना[5]लङ्कार्यतया च भूषणत्वानुपपत्तिः[6] । Quoting Bhāmaha's example of this figure (iii, 22)

Figures rejected as such.

स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरतापि तनुं यस्य शम्भुना न हृतं बलम् ॥

he remarks: अत्र सकललोकप्रसिद्धजयित्वव्यतिरेकिकन्दर्पस्वभाव-मात्रमेव वाक्यार्थः । Kuntaka next quotes with approval Bhāmaha's *kārikā* (ii, 86) which rejects *hetu*, *sūkṣma* and *leśa* as figures, because they do not

(1) The line omitted here is corrupt and gives no sense. (2) Jayaratha (pp. 148-9), following Kuntaka, rejects यथासंख्य, from the enumeration of poetic figures and refers to this passage of Kuntaka. (3) सुत्रापात्यहरणानि Ms. (4) पथ्यन्ते Ms. (5) ०लङ्कारान्तर्भाविना० Ms. (6) ०नुपपत्ते: Ms.

manifest any *vaicitrya* or charmingness of expression. Under the first figure, he cites and criticises the verse सङ्केतकालमनसं विटं ज्ञात्वा ( already quoted in *Dhvanyāloka* p. 103 ); and under the second and third figures respectively, Kuntaka cites and criticises Daṇḍin ii, 266 ( राजकन्यानुरक्तं मां ) and 236 ( अयमान्दोलितप्रौढ० ). He thinks that in these cases स्वभावमात्रमेव रमणीयम्, and hence they are *alaṃkārya* and not *alaṃkāra*. In the same way, he rejects *upamā-rūpaka* which is regarded by Bhāmaha as an independent *alaṃkāra* ( केचिदुपमारूपकाणामलङ्करण[त्वं] मन्यन्ते, तदयुक्तम्, अनुपपद्यमानत्वात्), quoting and commenting on Bhāmaha's example of the figure ( समस्तगगनाभोगम्, iii, 35 ).

Kuntaka concludes this chapter with a *kārikā* in *Śārdūla-vikrīḍita* metre on the general nature of वस्तुवक्रता ( वस्तुवक्रतास्वरूपमासूत्रयति ). As the *vṛtti* itself is corrupt in places, the missing *kārikā* cannot be entirely restored, but it appears to contain a comparison between poetic speech ( वाक् ) and नायिका :

लावण्यादिगुणोज्ज्वला प्रतिपदन्यासैर्विलासाञ्चिता
विच्छित्त्या रचितैर्विभूषणभरैरल्पैर्मनोहारिणी ।
अत्यर्थं रसवत्तयार्द्रहृदया......उदाराभिधा
वाक्............मनोहर्तुं यथा नायिका ॥

The colophon to this chapter reads : इति कुन्तलकविरचिते वक्रोक्तिजीविते तृतीयोन्मेषः समाप्तः ॥ श्रीः ॥

## Unmesa IV.

This chapter opens with a *kārikā* on *prakaraṇa-vakratā*, of which the latter part is probably lost and the *vṛtti* on which is corrupt. It runs thus :

*Prakaraṇa-vakratā*

एवं सकलसाहित्यसर्वस्वकल्पवाक्यवक्रताप्रकाशनानन्तरमवसरप्राप्तां प्रकरणवक्रतामवतारयति—

यत्र निर्यन्त्रणोत्साहपरिस्पन्दोपशोभिनी[1] ।
व्यावृत्तिर्व्यवहर्तृणां स्वाशयोल्लेखशालिनी[2] ॥ १ ॥
अव्यामूलादनाशङ्क्यसमुत्थाने मनोरथे[3] ।
काप्युन्मीलति निःसीमा सा प्रबन्धस्य[4] वक्रता ॥ २ ॥

[वक्रता] वक्रभावो भवतीति सम्बन्धः । कीदृशी—निःसीमा निरवधिः । यत्र यस्यां व्यवहर्तृणां तद्व्यापारपरिग्रहव्यग्राणां व्यावृत्तिः प्रवृत्तिः काप्यलौकिकी उन्मीलति उद्भिद्यते । किंविशिष्टा—निर्यन्त्रणोत्साहपरिस्पन्दोपशोभिनी निरर्गलव्यवसायस्फुरितस्फारविच्छित्तिः । अतएव स्वाशयोल्लेखशालिनी निरुपमनि[ज]हृदयोल्लासितालङ्कृतिः । कस्मिन् सति—अव्यामूलादनाशङ्क्यसमुत्थाने मनोरथे । कन्दात्प्रभृत्य(?) सम्भाव्यसमुद्भेदे समीहिते । तदयमत्रार्थः········Then he goes on to quote as examples of प्रकरणवक्रता from the third act (entitled सेतुबन्ध) of a drama cited as अभिजातजानकी ;

तत्र नीलस्य सेनापतेर्वचनम्

---

(1) ०शोभिनि Ms. (2) ०शालिनि Ms. (3) ०मनोहरे Ms. The reading is corrupt : अव्यामूलादीनांशक्य (4) *sic* in Ms : but we expect प्रकरणवक्रता. The reading is सा प्रबन्धास वक्रता,

शैलाः सन्ति सहस्रशः प्रतिदिशं वल्मीककल्पा इमे
दोर्दण्डाश्च[1] कठोरविक्रमरसक्रीडासमुत्कण्ठकाः।
कर्णास्वादितजम्भसम्भवकथा[2] किन्नाम कल्लोलिनी
प्रायो गोष्पदपूरणेऽपि कपयः कौतूहलं नास्ति वः॥

वानराणामुत्तरवाक्यं नेपथ्ये कलकलानन्तरम्

आन्दोल्यन्ते कति न गिरयः कन्दुकानन्दमुद्रां
व्यातन्वानां करपरिसरे कौतुकोत्कर्षहर्षे[3]।
लोपामुद्रापरिदृढकथाभिज्ञताप्यस्ति किन्तु
व्रीडावेशः पवनतनयोच्छिष्टसंस्पर्शनेन॥

......रामेण पर्यनुयुक्तजाम्बवतोऽपि वाक्यम्

अनङ्कुरितनिःसीममनोरथरुहेष्वपि[4]।
कृतिनस्तुल्यसंरम्भमारभन्ते[5] जयन्ति च॥

एवंविधमपरमपि। तत एव विभावनीयमभिनवाद्भुतं भोगभङ्गीसुभगं सुभाषितसर्वस्वम्। As another example of प्रकरणवक्रता Kuntaka cites *Raghu*°, Canto V, the episode of Raghu and Kautsa, citing and commenting on the verses किं वस्तु विद्वन् गुरवे प्रदेयम् (v,18), तं भूपतिर्भासुरहेमराशिम् (v,30), गुर्वर्थमर्थी श्रुतपारदृश्वा (v, 24) and जनस्य साकेतनिवासिनस्तौ (v, 31), and remarking कुबेरं प्रति सामन्तसम्भावनया जयाध्यवसायः काममपि सहृदयहृदयहारितां प्रतिपद्यते।...............
अन्यच्च, 'जनस्य साकेत' इत्यादि अत्रापि गुरुप्रदेयदक्षिणातिरिक्तकार्तस्वरमप्रतिगृह्णतः कौत्सस्य, रघोरपि प्रार्थितशतगुणं सहस्रगुणं वा प्रयच्छतो निरवधि[निः]स्पृहतौदार्यसम्पत्साकेतवासिनमाश्रित्यापूर्वां[6] काममपि महोत्सवमुद्रामाततान। एवमेषां महाकविप्रबन्धेषु प्रकरण-

(1) दोर्दण्डाप॰ Ms. (2) Is it जङ्गसम्भवकथा? (3) ॰हर्ष Ms. (4) रुषास्वपि Ms. (5) ॰मारभन्ते Ms. (6) ॰श्रित्य पूर्वः Ms.

वक्रताविच्छित्तिः रसनिष्यन्दिनो सहृदयैः स्वयमुत्प्रेक्षणीया।

Then Kuntaka goes on :

इमावेव प्रकारान्तरेण प्रकाशयति—

इतिवृत्तप्रयुक्तेऽपि कथावैचित्र्यवर्त्मनि।
उत्पाद्यलवलावण्यादन्या भवति[1] वक्रता॥ ३॥
(तथा) यथा प्रबन्धस्य सकलस्यापि जीवितम्।
भाति प्रकरणं काष्ठाधिरूढरसनिर्भरम्॥ ४॥

तथा उत्पाद्यलवलावण्यादन्या भवति[2] वक्रता—तेन प्रकारेण कृत्रिमसंविधानकमनीयकालौकिको वक्रभावभङ्गी समुज्जृम्भते, सहृदयानावर्जयतीति यावत्। क्व[3]—कथावैचित्र्यवर्त्मनि काव्यस्य ......[4] वैचित्र्यभावमार्गे। किंविशिष्टे—इतिवृत्तप्रयुक्तेऽपि इतिहासपरिग्रहेऽपि। तथेति यथाप्रयोगमपेक्षत इत्याह—यथा प्रबन्धस्य सकलस्यापि जीवितं भाति प्रकरणम्। येन प्रकारेण सर्गबन्धादेः[5] समग्रस्यापि प्राणप्रतिमम्[6] अङ्गम्। कीदृग्भूतम्—काष्ठाधिरूढरसनिर्भरम्। प्रथमधाराध्यासित(?)शृङ्गारादिपरिपूर्णम्। As an example Kuntaka quotes and comments on the introduction of the curse of Durvāsas in the *Abhijñāna-śakuntala* and its effect on the king's mind, citing in this connexion the verses विचिन्तयन्ती यमनन्यमानसा (iv, 87), रम्याणि वीक्ष्य मधुरांश्च (v, 104), प्रत्यादिष्टविशेषमण्डन० (vi,138) and आश्लिष्टबालतरु० (vi, 152)[7]. Then he adds :

---

(1) ०दन्यावगति Ms. (2) ०दन्य लवति Ms. (3) स Ms. (4) The words omitted are corrupt and read वीरवीचि. (5) Ms repeats सकलस्यापि here. (6) प्राणप्रियं Ms. (7) The commentary portion is so corrupt that it is not possible either to follow the remarks or give an intelligible summary of it.

उत्पाद्यलवलावण्यादिति द्विधा व्याख्येयम्। क्वचिदसदेवोत्पाद्यम् अथवा[1] आहृतम्, क्वचिदौचित्यत्यक्तं सदप्यन्यथा सम्पाद्यं[2] सहृदयहृदयाह्लादनाय। यथोदात्तराघवे मारीचवधः। तच्च प्रागेव (पः ४२) व्याख्यातम्। एवमन्यदप्यस्या वक्रताविच्छित्तेरुदाहरणं महाकविप्रबन्धेषु स्वयमेवोत्प्रेक्षणीयम्।

निरन्तररसोद्गारगर्भसन्दर्भनिर्भराः।
गिरः कवीनां जीवन्ति न कथामात्रमाश्रिताः॥

इत्यन्तरश्लोकः।

Then he goes on to the next *kārikā* on the subject:

अपरमपि प्रकरणवक्रताप्रकारमाविर्भावयति—

प्रबन्धस्यैकदेशानां फ[ल]बन्धानुबन्धवान्।
उपकार्योपकर्तृत्वपरिस्पन्दः परिस्फुरन् ॥५॥
असामान्यसमुल्लेखप्रतिभाप्रतिभासिनः।
सूते नूतनवक्रत्वरहस्यं कस्यचित्कवेः ॥६॥

सूते[3] समुन्मीलयति। किम्—नूतनवक्रत्वरहस्यम्, अभिनववक्रभावोपनिषदम्। कस्यचित्, न सर्वस्य, कवेः,...[4] प्रस्तुतौचित्यचारुरचनाविचक्षणस्येति यावत्। कः—उपकार्योपकर्तृत्वपरिस्पन्दः, अनुग्राह्यानुग्राहकत्वमहिमा। किं कुर्वन्—परिस्फुरन्, समान......(उ)न्मीलन्। किंविशिष्टः—फलबन्धानुबन्धवान्, प्रधानकार्यानुसन्धानवान्, कार्यानुसन्धाननिपुणः। कस्यैवंविध[5] इत्याह—असामान्यसमुल्लेखप्रतिभाप्रतिभासिनः, निरुपमोन्मीलितशक्तिविभवभ्राजिष्णोः[6]।

---

(1) यथा वा Ms. (2) न मान्यं Ms. (3) Portions of the वृत्ति from here up to प्रतिभाप्रतिभासिनः are repeated in the Ms. (4) The word omitted as corrupt here is given as कविनः in one place and कथितः in another, in the Ms. (5) कयमहमेवंविध Ms. (6) ०भ्राजिष्णु Ms.

केषाम्—प्रबन्धस्यैकदेशानाम्, प्रकरणानाम्। तदिदमुक्तं भवति—...[1] सन्निवेशशोभिनां प्रबन्धावयवानां प्रधानकार्य[2]सम्बन्धनिबन्ध[ना]नुग्राह्यग्राहकभावः स्वभावसुभगप्रतिभाप्रकाश्यमानः कस्यचिद्विचक्षणस्य[3] वक्र[ता]चमत्कारिणः कवेरलौकिकं वक्रतोल्लेखलावण्यं समुल्लासयति। यथा पुष्पदूषितके[4] द्वितीयेऽङ्के प्रस्थानात् प्रतिनिवृत्तस्य ......[5] अमन्दमदनोन्मादमुद्रेण समुद्रदत्तेन निजमहिमाकेतनं तुल्यदिवसमानन्दयन्तो(?)........[6]प्रविशता प्रकम्पावेगविकलालसकाय[7]-निपातनिहितनिद्रस्य द्वारदेशशायिनः.........[8]कुवलयस्योत्कोचकारणं स्वकरादङ्गलीयकदानं यत्कृतं तच्चतुर्थेऽङ्के मथुराप्रतिनिवृत्तेन तेनैव...[9] निष्क्रम्य समावेदितसमुद्रदत्तवृत्तान्तेन कुलकलङ्कातङ्ककदर्थ्यमानस्य सार्थवाहसागरदत्तस्य स्वत[न]यस्पर्शमान...[10]शीलशुद्धिमुन्मीलयत्तदुपकाराय कल्पते[11] ।......यथा चोत्तररामचरिते पृथुगर्भभरखेदितदेहाया विदेहराजदुहितुर्विनोदाय दाशरथिना चिरन्तनराजचरितचित्ररुचिं दर्शयता निर्व्याजविजयिविजृम्भमाणजृम्भकास्त्राण्युद्दिश्य 'सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ति' (Act i, p. 22) इति यदभिहितं तत्पञ्चमेऽङ्के प्रवीरचर्याचतुरेण चन्द्रकेतुना क्षणं समरकेलिमाकाङ्क्षता

---

(1) The word omitted is corrupt and reads प्रातर्विक in Ms. (2) प्रधानवल० Ms. (3) विचक्षणः Ms. (4) This lost drama is quoted in दशरूपकावलोक (ed. Parab iii, 42, p. 72) and apparently in साहित्यदर्पण vi, 225 (quoted as पुष्पभूषितक). (5) The passage omitted as corrupt reads: निविडानुकारदः नवरात्रविभावादर्शी. (6) The omitted corrupt passage reads: समाननाय मणिमुचेनेव. (7) ०विकललासकायन Ms. (8) The omitted corrupt words read in Ms as कदाहायमानस्य. (9) The words omitted as corrupt read: शमदमस्य. (10) The words omitted as corrupt are: समाविदूरसुधा. (11) The rest of the passage (one line) is hopelessly corrupt and unintelligible.

तदन्तरायकलितकलकलाडम्बराणां वरूथिनीनां सह[ज]जयोत्कण्ठा-भ्राजिष्णोर्जानकीनन्दनस्य जृम्भकास्त्रव्यापारेण कमप्युपकारमुत्पा-दयति। तथा च तत्र

लवः[1]—भवतु जृम्भकास्त्रेण तावत्सैन्यानि स्तम्भयामि। इति

सुमन्त्रः ( ससम्भ्रमम् )—

वत्स, कुमारेणानेन जृम्भकास्त्रमभिमन्त्रितम्।

चन्द्रकेतुः—आर्य, कः सन्देहः।

व्यतिकर इव भीमो वैद्युतस्तामसश्च
प्रणिहितमपि चक्षुर्ग्रस्तमुक्तं हिनस्ति।
अभिलिखितमिवैतत्सैन्यमस्पन्दमास्ते
नियतमजितवीर्यं जृम्भते जृम्भकास्त्रम्॥

आश्चर्यम्

पातालोदरकुञ्जपुञ्जित[2](तमः)श्यामैर्नभो जृम्भकै-
रन्तःप्रस्फुरदारकूटकपिल(ज्योति)र्ज्वलद्दीप्तिभिः।
कल्पाक्षेपकठोरभैरवमरुद्व्यस्तैरवस्तीर्यते
नीलाम्भोदतडित्कडारकुहरैर्विन्ध्याद्रिकूटैरिव॥

इत्यादि। तत एक एवायम्। 'एकदेशानाम्'[3] इति बहुवचनमत्र द्वयोरपि बहूनाम् उपकार्योपकारकत्वं स्वयमुत्प्रेक्षणीयम्।

Kuntaka continues to describe another variety of this *vakratā* :

अस्या एव प्रकारान्तरं प्रकाशयति—

प्रतिप्रकरणं प्रौढप्रतिभाभोगयोजितः।
एक एवाभिधेयात्मा बध्यमानः पुनः पुनः॥७॥

---

(1) The readings of this extract from उत्तररामचरित Act V, differ in many places from those of the printed editions. (2) कूजित only in Ms for कुञ्जपुञ्जित॰ (3) एकदेशतामिति Ms.

अन्यूननूतनोल्लेखरसालङ्करणोज्ज्वलः ।
बध्नाति वक्रतोद्भेदभङ्गीमुत्पादिताद्भुताम् ॥८॥

बध्नातीति[1] यत्र निबिडयतीति यावत्। काम्—वक्रतोद्भेदभङ्गीम्, वक्रभावाविर्भावात्[2] शोभाम्। किंविशिष्टाम्—उत्पादिताद्भुताम्, कन्दलितकुतूहलाम्। कः[3]—एक एवाभिधेयात्मा, तदेव वस्तुस्वरूपम्। किं क्रियमाणम्—बध्यमानम्[4], प्रस्तुतौचित्यचारु[5]रचनागोचरतामापद्यमानम्[6]। कथम्—पुनः पुनः, वारं वारम्। क—प्रति प्रकरणम्, प्रकरणे प्रकरणे, स्थाने स्थाने इति यावत्। नन्वेवं पुनरुक्तपात्रतामसौ समासादयतीत्याह—अन्यूननूतनोल्लेखरसालङ्करणोज्ज्वलः, अविकलाभिनवोल्लासशृङ्गाररूपकादिपरिस्पन्दभ्राजिष्णुः। यस्मात् प्रौढप्रतिभाभोगयोजितः, प्रगल्भतरप्रज्ञाप्रकरप्रकाशितः। अयमस्य परमार्थः—तदेवं सकलचन्द्रोदय(?)प्रकरणप्रकारेषु, वस्तु प्रस्तुत[7]कथासंविधानकानुरोधान् मुहुर्मुहुरुपनिबध्यमानं यदि परिपूर्णपूर्वविलक्षणरूपकाद्य[8]लङ्काररामणीयकनिर्भरं भवति तदा कामपि रामणीयकमर्यादां वक्रतामवतारयति।

After citing the *Harṣa-carita*[9] as affording an example of this variety of *vakratā*, Kuntaka quotes, extensively from the drama *Tāpasa-vatsarāja-carita* charming illustrations of this form of प्रकरणवक्रता

(1) The portion from वृत्ति from here up to अन्यूननूतनोल्लेख० is repeated in Ms, but the readings are corrupt in both places. (2) वक्रता वाविर्भावात् in one place and वक्रभावाद्विर्भावात् in another place. (3) अतएव in the second or repeated passage. (4) वन्द्यमानं Ms. (5) ०चाम in one place and चामर in another. (6) रचनासास्वन्दमानं in the first passage. (7) प्रस्तुतः Ms. (8) विरूप for रूपकाद्य in Ms. (9) It is not clear what episode is particularly referred to.

He comments on the pathos of the king's speech beginning with (Act ii)

कुरवकतरुगाढाश्लेषं मुखासवलालनां[1]
वकुलविटपो रक्ताशोकस्तथा चरणाहतिम्[2] ।

but unfortunately the rest of the verse is corrupt in the Ms, as well as the comments on it. After referring to two other verses from the same drama (धारावेश्म विलोक्य and कर्णान्तस्थितपद्मराग°) already explained by himself[3], he quotes and discusses the following tearful (सास्रं) speech of the king (Act iii) :

सर्वत्र ज्वलितेषु वेश्मसु भयादालीजने विद्रुते[4]
त्रासोत्कम्पविहस्तया प्रतिपदं देव्या[5] पतन्त्या तदा ।
हा नाथेति मुहुः प्रलापपरया दग्धं वराक्या[6] तथा
शान्तेनापि वयं तु तेन दहनेनाद्यापि दह्यामहे[7] ॥

Kuntaka points out the use of विरोधालङ्कार in the last line to assist the pathetic sentiment (करुणरस) in the verse. Then the following verse from Act iv :

चतुर्थेऽङ्के राजा सकरुणमात्मगतम्

चक्षुर्यस्य तवाननादपगतं नाभूत् क्वचिन्निर्वृति-
र्येनैषा सततं त्वदेकशयनं वक्षःस्थली कल्पिता ।

(1) °सवलनां in Ms. (2) The reference in Berlin Ms of the drama is ii, 73a. (3) See above pp. 151-2. (4) The readings are corrupt in our Ms, but they corrected, when possible, from Hultzsch's quotations from the Berlin Ms. दविजने विविक्षते in our Ms. (5) देव्या Ms. (6) पराध्या Ms. (7) Berlin Ms, iii 77a.

येनोद्भासि(?)[1]तया विना वत[2] जगच्छून्यं क्षणाज्जायते
सोऽयं दक्षधृतव्रतः प्रियतमे कर्तुं किमप्युद्यतः[3] ॥

The next verse from the same drama ( Act v, Berlin Ms v, 86 b ):

भ्रूभङ्गं रुचिरे ललाटफलके तारं[4] समारोपयन्
बाष्पाम्बुप्लुतपीतपत्ररचनां कुर्यात्कपोलस्थलीम् ।
व्याहृतैर्विनिबन्धचाटुमहिमामालोक्य लज्जानतां
तिष्ठेत् किं कृतकोपभारकरुणैराश्वासयेनां प्रियाम् ॥

The उन्माद अवस्था of the king evidenced by the verse ( Act V, Berlin Ms v, 87a ) is then commented upon as enhancing the करुणरस :

किं प्राणा न मया तवानुगमनं कर्तुं समुत्साहिता
बद्धा किं न जटा न वा प्ररुदितं भ्रान्तं वने निर्जने ।
त्वत्सम्प्राप्तिविलोभनेन पुनरप्यूनेन पापेन किं
किं कृत्वा कुपिता यदद्य न वचस्त्वं मे ददासि प्रिये ॥

इति । 'रोदिति' इत्यन्तेन मनागुन्मादमुद्राप्युन्मीलिता तमेव [=कारुण्यमेव] प्रोद्दीपयति ।

षष्ठेऽङ्के राजा—हा देवि

त्वत्सम्प्राप्तिविलोभनेन सचिवैः प्राणा मया धारिता-
स्तन्मत्वा त्यजतः शरीरकमिदं नैवास्ति निःस्नेहता ।
आसन्नोऽवसरस्तथानुगमने जाता धृतिः किन्त्वयं
खेदो यच्छतधा गतं न हृदयं तद्वत् क्षणे दारुणे[5] ॥

---

(1) यनेत्यासि Ms. (2) वस Ms. (3) This line is already commented upon by our author. See above वृत्ति १५०, (4) हारं Ms. (5) Berlin Ms vi, 93a. The last line in our Ms reads खेदोऽयं क तदा.

After this, Kuntaka refers to *Raghu*° ix, the episode of Daśaratha's hunting expedition ( मृगया-प्रकरण ) and remarks : प्रमाद्यता दशरथेन राज्ञा स्थविरान्ध-तपस्विबालवधो व्यधीयतेति एकवाक्यशक्यप्रतिपादनः पुनरप्ययमर्थः परमार्थसरससरस्वतोसर्वस्वायमानप्रतिभाविधानकलेशेन तादृश्या विच्छित्त्या विस्फुरितश्चेतनचमत्कारकरणतामधितिष्ठति। The poet's treatment of this episode is then discussed in detail, and verses 63 (व्याघ्रानभीरभिमुखो°), 67 (अपि तुरगसमीपात्), 57 (लक्ष्यीकृतस्य हरिणस्य), 70 (स ललितकुसुम°) 69 (इति विस्मृ-तान्य°), 72 (अथ जातु रुरोर्गृहीत°) and 80 (शापोऽप्यदृष्टतनया°) are quoted in this order from the canto in question.

The next *kārikā* is missing in the Ms and can be only partially recovered thus from the *vṛtti* :

कथावैचित्र्यपात्रं [तद्वक्रिमाणं प्रपद्यते]।
यदङ्गं सर्गबन्धादेः सौन्दर्याय निबध्यते ॥८॥

प्रसङ्गेनास्या एव प्रभेदान्तरमुन्मीलयति।……वक्रिमाणं[1] किंविशिष्टम् — कथावैचित्र्यपात्र[म्], प्रस्तुतसंविधानकभङ्गीभाजनम्[2]। किं तत्— यदङ्गं सर्गबन्धादेः[3] सौन्दर्याय निबध्यते। यज्जलक्रीडादि[4]प्रकरणं महाकाव्यप्रभृतेरुपशोभानि[ष्प]त्त्यै निवेश्यते। अयमस्य परमार्थः— प्रबन्धेषु जलकेलिकुसुमावचयप्रभृति प्रकरणं प्रक्रान्तसंविधानकानु-बन्धि[5] निबध्यमानं निधानमिव कमनीयसम्पदः सम्पद्यते।

---

The reading in the text is adopted from the Berlin Ms, which gives better sense. ( Hultzsch, *Nachr. Gott: Gess.* 1886, p. 238 ).

(1) There must have been a lacuna here for the missing पाद, although such lacuna is not marked in the Ms. (2) °भोजनं Ms. (3) यदङ्गसंसर्गबन्धादेः Ms. (4) °क्रीडादिषु Ms. (5) संविद्यानुकानुबन्धि Ms.

The example cited is the episode of Kuśa's जलक्रीडा in *Ragu*⁰ xvi, and verses 54 ( अयोमिलोलोन्मद⁰ ) and 82-85 ( अवैमि कार्यान्तरमानुषस्य etc ) are cited and discussed in this connexion[1].

The next *karikā* on *prakaraṇa-vakratā* runs thus:

पुनरप्यस्याः प्रभेदमुद्भावयति—

यत्राङ्गिरसनिष्यन्दनिकषः कोऽपि लक्ष्यते ।
पूर्वोत्तरैरसम्पाद्यः साङ्गादेः कापि वक्रता ॥ १० ॥

साङ्गादेः कापि वक्रता……[2] प्रकरणस्य[3] सा काप्यलौकिकी वक्रता वक्रभावो भवतीति सम्बन्धः। यत्राङ्गिरसनिष्यन्दनिकषः कोऽपि लक्ष्यते—यत्र यस्यामङ्गी रसो यः[4] प्राणरूपः, [तस्य] निष्यन्दः प्रवाहः, तस्य[5] काञ्चनस्येव निकषः परीक्षापदविषयो विशेषः कोऽपि…[6] निरुपमो लक्ष्यते……[7]। किंविशिष्टः—पूर्वोत्तरैरसम्पाद्यः, प्राक्-परवर्तिरङ्गाद्यैः सम्पादयितुमशक्यः। The example cited is यथा विक्रमोर्वश्यामुन्मत्ताङ्कः, where विप्रलम्भ शृङ्गार is the अङ्गी रस :

तथा च तदुपक्रम एव—"राजा ( ससम्भ्रमम् )—आ दुरात्मन्, तिष्ठ तिष्ठ, क्व नु खलु प्रियतमामादाय गच्छसि। ( विलोक्य ) कथं शैलशिखराद् गगनमुत्प्लुत्य बाणैर्मामभिवर्षति। ( विभाव्य सबाष्पम् ) कथं विप्रलब्धोऽस्मि ।

---

(1) The passages are too corrupt for intelligible quotation or even for a sensible presentation of their general drift. (2) The words omitted are corrupt and read : साङ्गकादि कापि वक्रता मत्संकमगान्…सप्रवृत्तः (3) प्रकरण Ms. (4) The passage is obviously corrupt and reads : यत्र यत्सङ्गिनी रसो यस्य सः, which gives no consistent meaning. (5) यस्य Ms. (6) The words omitted are corrupt and read : भूतनिर्वाण. (7) The words omitted are corrupt and read : याजने… ‥दर्शैरिव.

नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः
सुरधनुरिदं दूराकृष्टं न नाम शरासनम् ।
अयमपि पटुर्धारासारो न बाणपरम्परा
कनकनिकषस्निग्धा विद्युत् प्रिया न ममोर्वशी ॥

In this quotation from the *Vikramórvaśīya*, Act iv, there is one point to which attention may be drawn. The drama as known to Kuntaka possibly did not contain the Prakrit verse हिअआहिअ which occurs between अभिवर्षति and the verse नवजलधरः in some printed texts (ed. Bomb. Sansk. Ser. Act vi, p. 113 Aa); while the passage कथं विप्रलब्धोऽस्मि does not occur in this place in the printed edition. This point need not be pressed too far, but it possibly supports the suspicion of those scholars who regard the Prakrit verses in this Act as interpolations. The other two verses referred to by Kuntaka in this connexion are पक्ष्मरां स्पृशिदसमतों and तरङ्गभ्रूभङ्गा which, as he himself says, he has commented upon already (see above pp. 151, 161). The next example cited is : यथा वा किराता-र्जुनीये बाहुयुद्धप्रकरणम्, where the *rasa* involved is वीर.

The next *kārikā* describes another variety of the same :

पुनरिमामेवान्यथा प्रथयति—

प्रधानवस्तुनिष्पत्त्यै वस्त्वन्तरविचित्रता ।
यत्रोल्लसति सोल्लेखा सापराप्यस्य वक्रता ॥१६॥

अपरापि अस्य प्रकरणस्य वक्रता वक्रभावो भवतीति सम्बन्धः। यत्रोल्लसति[1] उन्मीलति सोल्लेखा अभिनवोद्भेदभङ्गीसुभगा......[2]प्रतिरूपमितरद्वस्तु तस्य विचित्रता वैचित्र्यं नूतनचमत्कार इति यावत्। किमर्थम्—प्रधानवस्तुनिष्पत्त्यै। प्रधानमविकृतं प्रकरणं कमपि वक्रिमाणमाक्रमति। As an example is quoted the episode from the *Mudrā-rākṣasa*, introduced with ततः प्रविशति रज्जुहस्तः पुरुषः (Act vi), and the conversation which follows. In this connexion, the verse छग्गुणसंजोअदिढा (Act vi, 4) is quoted and commented on, but the verse is so corrupt in the Ms that it is almost beyond recognition. The drift of the whole conversation between Rākṣasa and the *puruṣa* relating to Candanadāsa, beginning with भद्रमुख, अग्निप्रवेशे सुहृदस्ते को हेतुः and ending with *puruṣa's* words अज्ज अध इं is explained with reference to the above *kārikā*.

The next *kārikā* further explains and develops the above :

पुनर्भङ्ग्यन्तरेण व्याचष्टे—

सामाजिकजनाह्लादनिर्माणनिपुणैर्नटैः[3]।
तद्भूमिकां समास्थाय निर्वर्तितनटान्तरम्[4] ॥१२॥

---

(1) यमोल्लध्यति Ms. (2) Some words are lost here and the Ms marks a *lacuna* with वाशौ......रि. Undoubtedly the phrase वस्त्वन्तरविचित्रता which is explained must have occurred here. (3) The verse is corrupt in Ms and reads ०धर्माणनिपुणैतदे. (4) निर्वातनन्दान्तर Ms.

क्वचित् प्रकरणस्यान्तः[1] स्मृतं प्रकरणान्तरम्[2] ।
सर्वप्रबन्धसर्वस्वकलां पुष्णाति वक्रताम् ॥१३॥

सर्वप्रबन्धसर्वस्वकलां पुष्णाति वक्रताम्, सकलरूपकप्राणरूपकं समुल्लासयति वक्रिमाणम्। क्वचित् प्रकरणस्यान्तः स्मृतं प्रकरणान्तरम्, कस्मिंश्चित् कविकौशलोन्मेषशालिनि[3] नाटके, न सर्वत्र। एकस्य मध्यवर्ति अङ्कान्तरगर्भीकृतं......[4] इति यावत्। किंविशिष्टम्—निर्वर्तितनटान्तरम्, विभावितान्यनर्तकम्। नटैः कौटस्थैः[5]—सामाजिकजनाह्लादनिर्माणनिपुणैः सहृदयपरिषत्परितोषणनिष्णातैः। तद्भूमिकां समास्थाय सामाजिकीभूय। इदमत्र तात्पर्यम्—कुत्रचिदेव निरङ्कुशकौशला[:] कुशीलवा[:] स्वीयभूमिका[6]परिग्रहेण रङ्गमलङ्कुर्वाणाः[7] नर्तकान्तरप्रयुज्यमाने प्रकृतार्थजीवित इव गर्भवर्तिनि[8] अङ्कान्तरे[9] तरङ्गितवक्रतामहिम्नि सामाजिकीभवन्तो विविधाभिभावनाभङ्गीभिः साक्षात्सामाजिकानां किमपि चमत्कारवैचित्र्यमासूत्रयन्ति[10]। यथा (बालरामा)यणे चतुर्थेऽङ्के[11] लङ्केश्वरानुकारी प्रहस्तानुकारिणा नटो नटेनानुवर्त्यमानः।

कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने।
नमः शृङ्गारबीजाय तस्मै कुसुमधन्वने ॥ (*Bāla-rām*° iii, 11).

Then the next verse in the drama (iii, 12 श्रवणैः पेयम्) is quoted, and commented upon. The next example given is from *Uttara-carita*, Act vii, where Rāma's speech हा कुमार हा लक्ष्मण etc is cited.

---

(1) °स्यान्त Ms. (2) प्रकरणान्तं| Ms. (3) °सेशशालिनि Ms. (4) The appearently corrupt words omitted are : गर्भो वा नाम. (5) The words are corrupt here and read : देवविभिः. (6) भूमिकाय Ms. (7) °कुर्वाणी Ms. (8) °वर्त्तिनी Ms. (9) अङ्गान्तरे. (10) °सूलयति Ms. (11) चतुर्थके Ms.

The next variety of प्रकरणवक्रता is defined as follows :

अपरमपि प्रकरणवक्रतायाः प्रकारमाविष्करोति—

सुखाभिसन्धिसम्ध्यादि[1] संविधानकबन्धुरम् ।
पूर्वोत्तरादिसङ्गत्या भङ्गानां[2] विनिवेशनम् ॥ १४ ॥
न त्वमार्गग्रहग्रस्तग्रहकाण्डकदर्थितम् ।
वक्रतोल्लेखलावण्यमुल्लासयति नूतनम् ॥ १५ ॥

Unfortunately, a part of the *vṛtti* on these *kārikās* is lost in the Ms and the remaining part is too corrupt to give a consistent sense. It seems, however, that भङ्गानाम् is paraphrased by the word प्रकरणानाम्, which fact makes it likely that the word is possibly अङ्गानाम्. The term पूर्वोत्तरादिसङ्गत्या is explained as : कस्मात्[3]—पूर्वोत्तरादिसङ्गत्या[:], पूर्वस्य पूर्वस्योत्तरेणोत्तरेण यस्माङ्गत्यमतिशयितसौगम्यम्[4] उप[5]जीव्योपजीवकभावलक्षणं तस्मात्। The substance of the first of these *kārikās* is thus set forth : इदमुक्तं भवति—प्रबन्धेषु पूर्वपूर्वप्रकरणम् अपरस्मात् (?) परस्य प्रकरणान्तरस्य सरससम्पादितसन्धिसम्बन्धसंविधानकसमर्प्यमाणकताप्राणं प्रौढिप्ररूढवक्रतोल्लेखमाह्लादयति । यथा पुष्पदूषितके प्रथमं प्रकरणम् । अतिदारुणाभिनव···वेदनानिरानन्दस्य······समागतस्य समुद्रतोरे समुद्रदत्तस्योत्कण्ठाप्रकारप्रकाशनम् । द्वितीयमपि—प्रस्थानात् प्रतिनिवृत्तस्य निशीथिन्यामुत्कोचालङ्कारदानमूकीकृतकुवलयस्य कुसुमवाटिकाया[6]मनाकलितमेव तस्य सहचरीसङ्गमनम् । तृतीयमपि—

(1) सम्ध्यापि Ms. (2) *Sic* in Ms. Is it अङ्गानां? (3) तस्मात् Ms.
(4) ०सौवङ्ग Ms. (5) कृप० Ms. (6) कुसुमपातितायाः० Ms.

सम्भावितदुर्विनयोऽपि[1] (?) नयदत्तनन्दिनोनिर्वासनव्यसनतत्समाधान-निबन्धनम्। चतुर्थमपि—मथुरां प्रतिनिवृत्त[स्य] कुवलयप्रदृश्यमाना-कुलोयकसमावेदितविमलसम्पदः कठोरतरगर्भभारखिन्नायां स्नुषायां निष्कारणनिष्कासनादनाहितप्रवृत्ते[2] र्महापातकिनमात्मानं मन्यमानस्य सार्थवाहसागरदत्तस्य तीर्थयात्राप्रवर्तनम्। पञ्चममपि—वनान्तः……[3] समुद्रदत्तकुशलोदन्तकथनम्। षष्ठमपि—सर्वेषां विचित्र-संख्यासमागमाभ्युपायसम्पादकमिति। एवमेतेषां……रसनिष्यन्द-तत्पराणां तत्परिपाटिः काममपि कामनीयकसम्पदमुद्भावयति। यथा वा कुमारसम्भवे—पार्वत्याः प्रथमतारुण्या[4]वतारवर्णनम्। हरशुश्रूषा दुस्तरतारकपराभवपारावारोत्तरण[5]कारणम् [इति] अरविन्दसूतेरु-पदेशः। कुसुमाकरसुहृदः कन्दर्पस्य पुरन्दरोद्देशाद् गौर्याः सौन्दर्यबला-द्विप्रहरतो हरविलोचनविचित्रभानुना भस्मीकरणदुःखावेशविवशाया [रत्याः] विलपनम्। विवक्षता (?) विकलमनसो मेनकात्मजाया-स्तपश्चरणम्।…………निरर्गलप्राग्भारपरिमृष्टचेतसा विचित्रशिख-ण्डिभिः शिखरिनाथेन वारणं[6] पाणिपोडनमिति[7] प्रकरणानि पौर्वा-पर्यपर्यवसितसुन्दरसंविधान[8]बन्धुराणि रामणीयकधारामधिरोहन्ति। एवमन्येष्वपि महाकविप्रबन्धेषु प्रकरणव[क्र]तावैचित्र्यमेव विवेचनीयम्

The next illustration cited is from the *Veṇī-saṃhāra*

---

(1) ०कुर्विनयोऽपि Ms. (2) The construction here is somewhat peculiar. (3) The portion omitted is corrupt, but it probably gives some proper names of the person by whom the good news of Samudradatta is narrated. (4) प्रसवताऽरुण्या Ms. (5) तारकापरिभव-परिवारोत्तरव्य Ms. (6) शिखरिनाथवार्यनं Ms. (7) It is noteworthy that the summary of the episodes of the कुमारसम्भव is given up to the marriage of गौरी. (8) ०सुन्दरसमविरुबन्ध० Ms.

Act ii (यथा वेणीसंहारे प्रतिमुखसन्ध्यङ्गभागिनि द्वितीयेऽङ्के), and from *Śiśupāla-vadha*. The whole topic is wound up with *antara-ślokas* which are fragmentary and corrupt in the Ms.

*Prabandha-vakratā.*

After dealing with *prakaraṇa-vakratā*, Kuntaka takes up *prabandha-vakratā* which forms apparently the last topic of discussion. The *kārikā* is given thus:

इतिवृत्तान्यथावृत्तरससम्पदुपेक्षया ।
रसान्तरेण[1] रम्येण यत्र निर्वहणं भवेत् ॥१६॥
तस्या एव[2] कथामूर्तेरामूलोन्मीलितश्रियः ।
विनेया[3]नन्दनिष्पत्त्यै सा प्रबन्धस्य वक्रता ॥१९॥

सा प्रबन्धस्य नाटकसर्गबन्धा[देः] वक्रता वक्रभावो भवतीति सम्बन्धः। यत्र निर्वहणं भवेत्, यस्यामुपसंहरणं स्यात्, रसान्तरेण इतरेण रम्येण रसेन रामणीयकविधिना। कया—इतिवृत्तान्यथावृत्तरससम्पदुपेक्षया। इतिवृत्तम्[4] इतिहासोऽन्यथापरेण प्रकारेण वृत्ता निर्व्यूढा या रससम्पत् शृङ्गारादिभङ्गी तदुपेक्षया तदनादरेण[5], तां परित्यज्येति यावत्। कस्याः—तस्या एव कथामूर्तेः, तस्यैव काव्यशरीरस्य। किंभूतायाः—आमूलोन्मीलितश्रियः। आमूलं प्रारम्भात् उन्मीलिता श्रीर्वाच्यवाचकरचनासम्पद् यस्यास्तथोक्ता तस्याः। किमर्थम्—विनेया[3]नन्दनिष्पत्त्यै, प्रतिपाद्यपार्थिवादिप्रमोदसम्पादनाय। As illustrations, Kuntaka cites *Veṇī-saṃhāra* and *Uttara-rāma-carita*. These two dramas are based respectively on

---

(1) सोन्तरेण Ms. (2) कस्येवं Ms. (3) विनय Ms. (4) इतिवृत्त Ms. (5) नेदंवादरेण Ms.

the epics *Mahābhārata* and *Rāmāyaṇa* which have *śānta-rasa* as the predominant sentiment ( रामायण-महाभारतयोश्च शान्ताङ्गित्वं पूर्वसूरिभिरेव[1] निरूपितम् ) : but the *itivṛtta* is somewhat differently treated in the two dramas, in which the prevailing *rasas* are *vīra* and *karuṇa* respectively. The *antara-śloka* with which this topic closes is corrupt.

The next variety of *prabandha-vakratā* is thus defined and explained :

त्रैलोक्याभिनवोल्लेखनायकोत्कर्षपोषिणा ।
इतिहासैकदेशेन प्रबन्धस्य समापनम् ॥ १८ ॥
तदुत्तरकथावर्तिविरसत्वजिहासया ।
कुर्वीत यत्र सुकविः सा विचित्रास्य वक्रता ॥१९॥

सा विचित्रा विविधभङ्गीभ्राजिष्णुरस्य प्रबन्धस्य वक्रता वक्रभावो भवतीति सम्बन्धः। कुर्वीत यत्र सुकविः—कुर्वीत विदधीत यत्र यस्यां सुकविरौचित्यपद्धतिप्रभेद[2]चतुरः। प्रबन्धस्य समापनम्—प्रबन्धस्य सर्गबन्धादेः समापनमुपसंहरणम्, समर्थनमिति यावत्। इतिहासैकदेशेन इतिवृत्तस्यावयवेन। किंभूतेन—त्रैलोक्याभिनवोल्लेखनायकोत्कर्षपोषिणा, जगदसाधारणस्फुरितनेतृप्रकर्षप्रकाशकेन[3]। किमर्थम्—तदुत्तरकथावर्तिविरसत्वजिहासया। तस्मादुत्तरा या कथा तद्वर्ति तदन्तर्गतं यद्विरसत्वं वैरस्यमनार्जवं तस्य जिहासया परिजिहीर्षया। इदमुक्तं भवति—इतिहासोदाहृतां कश्चन महाकविः सकलां कथां प्रारभ्यापि तदवयवेन[4] त्रैलोक्यचमत्कारकारणनिरुपमाननायकयशःसमुत्कर्षोदयदायिना तदग्रिमग्रन्थप्रसर[5]-

(1) ध्वन्यालोक p. 238. (2) ०पद्धतिप्रभा Ms. (3) ०प्रकाशेन Ms. (4) तदवयव Ms. (5) प्रसरः Ms.

सम्भावितनोरसभावहरणेच्छया[1] उपसंहरमाणस्य प्रबन्धस्य कामनोयकनिकेतनायमानवक्रिमाणमादधाति। यथा किरातार्जुनीये सर्गबन्धे[2]

द्विषां विघाताय विधातुमिच्छतो
रहस्यनुज्ञामधिगम्य भूभृतः ॥ (i, 3)

रिपुतिमिरमुदस्योदीयमानं दिनादौ
दिनकृतमिव लक्ष्मीस्त्वां समभ्येतु भूयः ॥ (i, 46)

एते दुरापं समवाप्य वीर्य-
मुन्मूलितारः कपिकेतनेन ॥ (iii, 22)

इत्यादिना दुर्योधननिधनान्तां धर्मराजाभ्युदयदायिनीं सकलामपि कथा[3]मुपक्रम्य कविना निबध्यमानत्वात्.........[4]दूरीभूतविभूतेः प्रभूतद्रुपदात्मजनिकारनिरतिशयोद्दीपितमन्योः कृष्णद्वैपायनोपदिष्टविद्यासंयोगसम्पदः पाशुपतादिदिव्यास्त्रप्राप्तये तपस्यतो गाण्डीवसुहृदः पाण्डुनन्दनस्यान्तरा किरातराजसम्प्रहरणात् समुन्मीलितानुपमविक्रमोल्लेखं कमप्यभिप्रायं प्रकाशयति। The comment goes on expanding these remarks and ends up with an *antara-śloka* which is fragmentary in the Ms.

Kuntaka then proceeds to deal with another variety of *prabandha-vakratā*, which is defined and explained as follows :

भूयोऽपि भेदान्तरमस्याः सम्भावयति—

प्रधानवस्तुसम्बन्ध[तिरोधान]विधायिना।
कार्यान्तरान्तरायेण[5] विच्छिन्नविरसा कथा ॥२०॥

---

(1) सम्भावितवीररसभावभया Ms. The emendation is conjectural from the sense of the कारिका. (2) सहिसर्गबन्धे Ms. (3) कला० Ms. (4) The passage omitted is corrupt and reads : "मेदखिद्दन्दारथाश्चदुरोदरहार. (5) कार्यान्तरेण Ms.

तत्रैव तस्य निष्पत्तेः[1] निर्निबन्ध[2]रसोज्ज्वलाम् ।
प्रबन्धस्यानुबध्नाति नवां कामपि वक्रताम् ॥२१॥

प्रबन्धस्य सर्गबन्धादेरनुबध्नाति द्रढयति नवामपूर्वोल्लेखां कामपि सहृदयानुभूयमानाम्—न पुनरभिधागोचरसचमत्काराम्—वक्रतां वक्रिमाणम् । काऽसौ—कार्यान्तरान्तरायेण[3] विच्छिन्नविरसा कथा । कार्यान्तरान्तरायेण अपरकृत्यप्रत्यूहेन[4] । विच्छिन्नविरसा विच्छिन्ना चासौ विरसा च सा, विच्छिद्यमानत्वादनावर्जनसंज्ञेत्यर्थः । किंभूतेन—प्रधानवस्तुसम्बन्ध[तिरोधान]विधायिना, अधिकारिकफलसिद्धुपायतिरोधानकारिणा[5] । कुतः[6]—तत्रैव तस्य निष्पत्तेः[7] । तत्रैव कार्यान्तरानुष्ठाने एतस्याधिकारिकस्य निष्पत्तेः संसिद्धेः । तत एव निर्निबन्धरसोज्ज्वलां निरन्तरायतरङ्गिताङ्गिरसप्रभाभ्राजिष्णुम् । अयमस्य परमार्थः—या किलाधिकारिककथानिषेधिकार्यान्तरव्यवधानाज् झगिति विघटमाना अलब्धावकाशापि विकाश्यमाना सा प्रस्तुतेतरव्यापारादेवं प्रस्तुतनिष्पन्नेन्दीवरसितरसनिर्भरा प्रबन्धस्य रामणीयक(मनोहरं) वक्रिमाण[8]मादधाति । The illustration given is *Śiśupāla-vadha.*

The *prabandha-vakratā* is further developed and explained thus :

तत्रैव फलसम्पत्तिसमुद्युक्तोऽपि नायकः ।
फलान्तरेष्वनन्तेषु तत्तुल्यप्रतिपत्तिषु ॥२२॥

---

(1) निष्पन्नः Ms. (2) निर्बन्ध Ms. (3) कार्यान्तरेण Ms. (4) Ms reads : अधिद्वारकृत्यप्रत्याहेन which is obviously corrupt. The emendation is conjectural. (5) Ms reads ॰सिद्धुपायतिरोधिना. (6) कृतः Ms. (7) निष्पन्नेः Ms. (8) क्रियमाणं Ms.

धत्ते निमित्ततां स्फारयशःसम्भारभाजनम् ।
स्वमाहात्म्यचमत्कारात् सापरा चास्य वक्रता ॥२३॥

The *vṛtti* on this *kārikā* is corrupt and fragmentary but may be given thus : सापरापि अन्यापि, न प्रागुक्ता, अस्य रूपकादेर्वक्रता वक्रभावो भवतीति सम्बन्धः । यत्रैकफलसम्पत्ति-समुद्युक्तोऽपि नायकः—यत्र यस्याम् एकफलसम्पत्तिसमुद्युक्तोऽपि अपरा(?)भिमतवस्तुसाधनव्यवसितो[ऽपि] नायकः[1] । फलान्तरेष्वनन्तेषु तत्तुल्यप्रतिपत्तिषु धत्ते निमित्तताम्—फलान्तरेष्वपि साध्यरूपेषु वस्तुषु[2] अनन्तेषु [अ]गणनां नीतेषु तत्तुल्यप्रतिपत्तिषु आधिकारिकफलसमानो[3]-पपत्तिषु, प्रस्तुतार्थसिद्धेरेवाधिगतसिद्धिष्विति । The rest of the *vṛtti* on this verse appears to be lost, although no *lacuna* is marked in the Ms. This is clear from the fact that some words of the *kārikā* are left out in the explanation and no illustrations are given and discussed. The next *kārikā* is abruptly begun in continuation of the *vṛtti* with one foot missing. Probably one whole page or folio was lost or mis-placed in the original Ms, of which the scribe had no idea : hence no *lacuna* is marked. A part of the commentary on *kārikā* 23 appears later as a part of the commentary on *kārikā* 25 ( see below pp. 244,246 ). The example cited there is नागानन्द, with the mention in a fragmentary passage of जीमूतवाहन and शङ्खचूड ।

The next *kārikā* (as we have indicated) suffers

---

(1) Ms reads चेता after this word. (2) वस्तु Ms. (3) सम्मानतो Ms.

also from this loss and misplacement in the original Ms, and the first foot of the verse (which can however be restored from *vṛtti*) is missing :

[आस्तां वस्तुषु वैदग्ध्यं] काव्ये कामपि वक्रताम् ।
प्रधानसंविधानाङ्कनाम्नापि कुरुते कविः ॥२४॥

आस्तां वस्तुषु वैदग्ध्यम्—आस्तां दूरत एव वर्ततां वस्तुषु अभिधेयेषु प्रकरणेषु प्रतिपाद्येषु वैदग्ध्यं विच्छित्तिः । काव्ये कामपि वक्रतां कुरुते कविः—काव्ये नाटके सर्गबन्धादौ कामपि वक्रतां कुरुते विदधाति कविरित्यद्भुतप्रतिभाप्रसार[1]प्रकाशः । केन—संविधानाङ्कनाम्नापि । प्रधानप्रबन्धप्राणगतप्रायं यत्संविधानं कथायोजनं तदङ्कश्चिह्नमुपलक्षणं यस्य तत्तथोक्तं तच्च तन्नाम......[2] । 'अपि'-शब्दो विस्मयमुद्द्योतयति । The illustrations cited are such names as : यथा—अभिज्ञानशकुन्तल-मुद्राराक्षस-प्रतिमानिरुद्ध-मायापुष्पककृत्यारावण-छलितराम-पुष्पदूषितकादीनि ।......न पुनर्हयग्रीववधशिशुपालवध-पाण्डवाभ्युदय-रामानन्द-रामचरितप्रायाणि ।

The next *kārikā* is unfortunately missing, and cannot be restored from its fragmentary *vṛtti*. The sense appears to be that in such *prabandha-vakratā* different poets, basing the plot upon one particular legend, unfold it in different ways, sometimes abridging, sometimes expanding it. Curiously enough, the missing *kārikā* appears later, after the *kārikā* next following, with a corrupt and fragmentary *vṛtti* again on it. It runs thus :

---

(1) प्रचार Ms. (2) Ms is corrupt here and reads चेतनापि.

प्रबन्धवक्रतायाः प्रकारान्तरमप्याह—

अप्येककथया बद्धाः[1] काव्यबन्धाः[2] कवीश्वरैः।
पुष्णन्त्यनर्घामन्योन्यवैलक्षण्येन वक्रताम् ॥ २५॥

The *vṛtti* restored from both places[3] would run thus: पुष्णन्ति उल्लासयन्ति अनर्घामपरिच्छेद्याम् अन्योन्य(वैलक्षण्येन) परस्परवैसादृश्येन वक्रतां वक्रभावम्। के ते—काव्यबन्धाः रूपकपुरःसराः। किंविशिष्टा—अप्येककथया बद्धाः, एकेन······योजिताः[4]। —कैः कवीश्वरैः। [एकत्र] विस्तीर्णं वस्तु संक्षिपद्भिः, अन्यत्र संक्षिप्तं वा विस्तारयद्भिः कीदृशमपि(?) वा विचित्रवाच्यवाचकालङ्करणं सङ्कलनया नवतां नयद्भिरित्यर्थः।

As Kuntaka summarises: इदमत्र तात्पर्यम्—एकामेव कामपि कन्दलितकामनीयकां[5] कथां निर्वहद्भिर्बहुभिरपि कविकुञ्जरैर्निबध्यमाना बहवः प्रबन्धा मनागप्यन्योन्यसंवादनमनासादयन्तं सहृदयहृदयाह्लादकं कमपि वक्रिमाणमादधाति। यथा—रामाभ्युदय-उदात्तराघव-वीरचरित-बालरामायण-कृत्यारावण-मायापुष्पक-प्रभृतयः। ते हि प्रबन्धप्रवरास्तेनैव कथामार्गेण निरर्गलरसासारगर्भसम्पदा प्रतिपदं प्रतिवाक्यं प्रतिप्रकरणञ्च प्रकाशमानाभिनवभङ्गीप्राया र······भ्राजिष्णवो नवनवोन्मीलितनायकगुणोत्कर्षास्तेषां हर्षातिरेक[6]मनेकशोऽप्यास्वाद्यमानाः समुत्पादयन्ति सहृदयानाम्। एवमन्यदपि निदर्शनान्तरमुद्भावनीयम्।

---

(1) ······कथया वद्धा Ms. (2) ०बन्धान् Ms. (3) Possibly the pages of the original Ms were misplaced, and this कारिका and वृत्ति got mixed up and misplaced. (4) Ms is corrupt here and reads: एकेनाप्रीतिहृतिनयोजिताः. (5) कामनीयक एषां Ms. (6) ०गुणोत्कर्षकर्षास्तेषमतिरेक Ms.

कथोन्मेषसमानेऽपि वपुषीव नि[जै]र्गुणैः।
प्रबन्धाः प्राणिन इव प्रभासन्ते पृथक् पृथक्॥

इत्यन्तरश्लोकः।

The next *kārikā* is also missing but can be restored from the *vṛtti* thus :

नूतनोपायनिष्पन्ननयवर्त्मोपदेशिनाम्।
महाकविप्रबन्धानां सर्वेषामस्ति वक्रता॥२६॥

The *vṛtti* is corrupt in many places but many be restored thus : [महाकवि]प्रबन्धानां नवनिर्माणनैपुण्यनिरुपमानं-कविप्रकाण्डानां[1] प्रबन्धानां सर्वेषां सकलानामस्ति वक्रता वक्रभाव-विच्छित्तिः। [कीदृशानाम्—] नूतनोपाय[2]निष्पन्ननयवर्त्मोपदेशिनाम्। नूतनाः प्रत्यग्राः उपायाः सामादिप्रयोगप्रकारास्तद्विदां[3] गोचरा ये तैर्निष्पन्नं सिद्धं यन्नयवर्त्म नीतिमार्गः[4] तदुपदिशन्ति शिक्षयन्ति ये ते तथोक्तास्तेषाम्। इदमुक्तं[5] भवति—सकलेष्वपि सत्कविप्रबन्धेषु अभिनवभङ्गीनिवेशपेशलि नीत्याः फलमुपपद्यमानं प्रतिपाद्योपदेश-द्वारेण किमपि कारणमुपलभ्यत एव। यथा—मुद्राराक्षसे। तत्र हि प्रवरप्रज्ञाप्रभावप्रपञ्चितविचित्रनीति[6]व्यापाराः प्रगल्भन्त एव। तापसवत्सराजोद्देश एव व्याख्यातः। एवमन्यदप्युत्प्रेक्षणीयम्।

वक्रतोल्लेखवैकल्य·········लोक्यते।
प्रबन्धेषु कवीन्द्राणां कीर्तिकन्देषु किं पुनः॥ इत्यन्तरश्लोकः।

---

(1) ०कविप्रकाण्डवान् Ms. Just before this phrase the Ms repeats भासां वस्तुषु वैदग्ध्यं of the above कारिका and there is a somewhat confused arrangement of the words. (2) भविरतेनोपाय० Ms. (3) तद्विदामस्य Ms. (4) नीतितत्र Ms. (5) किमुक्तं Ms. (6) विचित्रमति Ms.

This is followed by *kārikā* 25, which is misplaced here (see above p. 242). The Ms breaks off with the discussion of नागानन्द as an illustration of the *prabanda-vakratā* described in that *kārikā*, with these words : यथा—नागानन्दे तत्र दुर्निवारवैरादपि वैनतेयान्तकादेक......सकलकारुणिकचूडामणिः शङ्खचूडं जीमूतवाहनो देहदानादभिरक्षन्न केवलं तत्कुल......।

Here our Ms ends without completing the chapter and the work. It seems, however, that not much of the work is lost, as *prabandha-vakratā* appears to be the last topic which the author had proposed to discuss and would naturally come at the end of the work. This topic is not completed, but possibly it could not have taken more than a few more *kārikās*. As no other topic is left for discussion, it is impossible to believe that the work contained more than four *unmeṣas*, or that the unfinished topic could have occupied such extended treatment as to require another *unmeṣa* to finish.

There is no colophon to this chapter, but the scribe marks : असमाप्तोऽयं ग्रन्थः ।

---

# I. Index to the Text

( *References are by chapter and verse, unless otherwise specified* ).

## A. Index of Kārikā-ślokas

## B. Index of Illustrative Quotations occurring in the Commentary

## C. Index of Antara-ślokas occurring in the Commentary



## D. Index of other Verses and Quotations in the Commentary

## E. Index of Authors and Works cited by name in the Commentary

( *References are to page* )



## F. Index of Authors and Works from which anonymous Quotations are made in the Commentary

## II. Index to the Resume

( *References are to pages* )

### A. Index of Kārikās

## B. Index of Illustrative Quotations

## C. Other Miscellaneous Quotations



## D. Antra-ślokas

## E. Works and Authors cited by Name



## F. Works and Authors quoted anonymously

# Additions and Corrections

Page 5, l. 4. It would be better to read ( with A.) क्वचित् कमनीय० ।

,, 6, l. 1. Read कर्तुमर्हतीति ; l. 15, read निष्कृष्य with B.

,, 8, l. 3. Insert परिसरवर्ती after त्वदीयं ।

,, 10, l. 4. Read कटाक्षेभ्यो बिभ्यत् ।

,, 14, l. 1. Read तामनूननव० ।

,, 15, l. 4. Read उदाहरिष्यन्ते with B.

,, 17, l. 6. Read जुगुप्सास्पदत्वेन । In the next line, leave space between अतीव and रमणीयम् ।

,, 18, l. 16. Read मनोगतिरुल्लङ्घ्य ।

,, 19, l. 4 Read सहृदयाः for सुहृदयाः ।

,, 22, l. 11. Read यया for यथा ।

,, 25, l. 12. Read कल्प्यते for कल्पते ।

,, 30, l. 4. There should be no space between तन्वी and कपोलतल० ; so also between दार्ढ्योऽम्भः and प्रवृत्तिप्रचः in l. 7, p. 33.

,, 33, l. 11. Read श्वासा for श्वासो. In the footnote, l. 4, delete ii and read =.

,, 34, footnote, l. 8. Add "and in ०*Locana* p. 60," after the comma.

,, 35, footnote l. 2. Read "33, śl. 48" for "p. 46, śl. 33."

,, 43, l. 14. Read स तथोक्तः ।

,, 46, l. 6. It would be better to read त्रैविध्यं व्यवस्थापयितुं, and in the next line read सौन्दर्य for सौन्दर्या ।

,, 47, last but one line. Read भावस्वभाव ।

Page 48, l. 15. There should be space between ०मलङ्कारादि and प्रतिभोद्भवं ।

„ 50. l. 19 Read विवव्रुः for विवत्तुः ।

„ 51, l. 9. The usual reading is स्मरता च यस्मिन् which seems preferrable to the reading of our Ms स्मरता च रात्रौ । l. 21. Delete यदि and read यद्दृ for तद्दृ in the next line.

„ 52, l. 5. Read विनिःश्वसद्वक्त्र० ।

„ 53, l. 2. Read मूर्ध्नि for मुर्ध्नि ।

„ 59, l. 2. There should be space beteen अतीव and चमत्कार० ।

„ 60, l. 13. Read शोभायै भूष्यते ।

„ 61, l. 3. Read भूयिष्ठेष्वपि ; l. 6, read युष्मान् ; l. 8, read युष्माकम० ।

„ 62, l. 20. Read निर्मिमीते for निर्निमीते ।

„ 63, l. 2. Read दुःश्रमया ।

„ 64, ll. 2-3. There should be space between कविना and नूतनत्वेन, and between तद्वतीव and प्रतीयमान ।

„ 66, l. 4. Read संवरणाकुल० । l. 8, leave space between वैदग्ध्यस्यन्दि and माधुर्यं ।

„ 72, l. 16. Read ०परिमितोऽद्रेस्तद्वलान्यावसन्तु ; l. 18, read सुरगजमदलेखा० । In the footnote, read "Berlin Ms iv, 84b."

„ 79, footnote l. 2. Read इत्युच्यन्ते ।

„ 82, l. 10. Read पायं for पापं ।

„ 83, l. 8. Sarvānanda on अमरकोश i, 5, 13, quotes from जानकीहरण a similar line मद्विपधूसरितः सरितस्तटः ।

Page 92, l. 1. Read स्वच्छायोत्कर्ष० ।

„ 93, l. 9. Read शूलिने for शूलिन: । l, 12. The reading ०व्यतिकरेण for ०व्यतिरेकेण would be better, although A reads व्यतिकरे ।

„ 94, l. 3. Read पुष्पकेण ; and in l. 10, read पृथक्त्वेन ।

„ 95, ll. 16-17. The reading of B, as noted in footnotes (9) and (10), appears to be better than that of A adopted in the text.

„ 96, l. 17. Read ०परिम्लानसमन्वया ।

„ 98, l. 8. Read रत्नापेक्षा with B ; l, 14, read पदपूर्वार्ध-वक्रतां, deleting footnote 12, for the emendation in the text is unnecessary and inaccurate.

„ 99, l. 14. Read शशाङ्कः as a separate word.

„ 102, l. 10. Read सती for सति ; l, 14, read प्रतिपादयितुं ।

„ 104, l. 7. Read परिमलन with A, to regularise the metre ; l. 15, read ०चन्द्रिकाप्लुत. The verse No. 54 is a quotation from शिशुपालवध v, 50.

„ 107, l. 3. Read कयह and रोह. The long ई in विसाहो-श्राए is not justifiable, but the long vowel is necessary for the metre.

„ 108, l. 17. Read रमणीयतां ; and in l.21, read मध्यान्तर्भूत० ।

„ 111, l. 12. Read परिस्फुरद्विभाव्यते ।

„ 112, l. 1. ०पलाय्यते would perhaps be a better reading, although it is not supported by the Mss.

„ 113, l. 14. Place a hyphen after वल्ली ।

„ 114, l. 12. The reading मध्ये of A is perhaps preferrable, as no उत्प्रेक्षा appears to be intended in the verse.

Page 116, l. 10. Read तथाविधवैशसन्दर्शन॰ ।

„ 117, l. 14. There should be no space between अवीधुरता and धारण॰. In footnote (11) to this page, read 'p. 53.'

„ 119 footnote last line. Read "p. 33" for "p. 55."

„ 122, l. 4. Read चूडाचन्द्रे ; and in l. 18, read कालवैचित्र्य॰ ।

„ 126, l. 13. Read इत्यनन्तरङ्गत्व॰ ।

„ 129, l. 3, Read समाम्नात ।

„ 135, l. 5. Read यस्मादगतिक for यस्माद् गतिक ।

„ 137, l. 4. Read दोर्मूलावधि, and in the last line of the footnote insert the word पल्लव after नव and before पल्लवा॰ ।

„ 138, l. 12. Read सौन्दर्यैकराज्येन ।

„ 139, l. 5. Adopting the reading of B which is preferrable, read तिरस्कारतात्पर्यैणाभिधानात ।

„ 140, l. 16. Read पदार्थाः ।

„ 142, l. 7. Adopt the reading of B, which is much better.

„ 143. Leave space between श्लाघया and प्रस्तुत॰ in l. 4, and बन्धुरा and प्रकृत॰ in l. 9 : while there should be no space between विच्छित्ता and प्रस्तुत॰ in the same line (l. 9). On l. 5, read ॰सम्भावनानुमाना॰ । On l. 14, and पृथगतिशयोक्ति॰ ।

„ 144. Read सम्बन्धः in l. 8, and तथा for तथ in l. 12.

„ 147, l. 10. Read सहृदय॰ for स्वहृदय॰ ।

„ 149. Read प्रत्यग्रपरिपोष॰ in l. 4.

„ 150. Read स्थायिभाव in l. 6, ॰विकल्पोल्लिख्य॰ in l. 16, and ॰कारणमुत्प्रेक्षमाणस्य in l. 17.

„ 151, l. 12. Read भ्रान्त्या for भान्त्या ।

Page 152, l. 2-3. Read रुमरुवद्वचनानन्तर०।

" 153, l. 3. There should be no space between व्यत्यस्त and हस्त०। On l. 9, read ०श्रंघ्रिभिः।

" 154, l. 9 Read ०सहकारैर्दर्शितेष्वङ्करेषु।

" 156, l. 3. There should be no space between सहज and सौकुमार्य०। On l. 15, read ०मेवालङ्कतानां for ०मेवालङ्कृतीनां।

" 160, l. 1. Read समाधेयतामधितिष्ठति। On l, 7 and वक्तव्यता०।

" 166, l. 3. Should the lacuna be filled up and the phrase read as अग्रविषाणवदनत्रस्येव ?

" 169, l. 3. Read नात्मनः for नात्मानः।

" 170, l. 7-8. The कारिका should be read thus :

ऊर्जस्वुदात्ताभिधयोः पौर्वापर्यप्रणीतयोः।
अलङ्करणयोस्तद्वद् भूषणत्वं न विद्यते॥

On l. 14, read तथा कामोऽस्य and on l. 18, read वक्तव्याल्लक्षणं। The verse अपहर्ताहमस्मीति (*variant* अपकर्ता०) is from काव्यादर्श ii, 293.

" 171, l. 10. Read न पुनरलङ्कारः। As the next sentence quoted in l. 12 is negative in sense, read न रसवदाद्यभिहित०। On l. 20, read तद्यदेव for तत्तदेव।

" 172, l. 1. Better read यस्य वेत्यपि for यस्येत्यपि। In the next line read वक्तव्यमेव। On l. 10, read तथा for तया ; and on l. 14, the reading should be कश्चिद् for कच्चिद्।

" 174, l. 5. Read the line as : अक्ष्णोः स्फुटाश्रुकलुषोऽरुणिमा विलीनः.

 

Page 175, l. 6. The word स्फुटोभूतं is obviously corrupt here, and probably should be read as स्फुरितं ।

„ 177, l. 11. Read धनुर्दधाना । The lines 22-23 have a somewhat strange active construction. We ought to read रसवदलङ्कारः समासादितः in the passive voice.

„ 178, l. 20. Should we read भ्वादिव्यतिरिक्तस्यैव for the corrupt passage ?

„ 181, l. 12. Read आड्वेअटिओ for आड्वेअटिकः ।

„ 185, l. 12. The sense requires that some such word as रूपकस्य should be read before प्रवृत्तेः ।

„ 186, ll. 5-6. The phrase रूपान्तरापादनं would give a bad construction. We should read रूपान्तरा-पादितानि agreeing with सर्वाणि । On l. 11, it would be better to split up इत्युभयथा० and read इति । उभयथा०.

„ 187, l. 5. The corrupt passage सुखमेव दुःसम्पाद्यते may be emended as सुखमेवेन्दुः सम्पाद्यते ।

„ 193, l. 18. The line निर्मोकमुक्ति etc. is a quotation from हर्षचरित (ed. Nirnaya Sagar Press, 1918, p. 19). Delete therefore या which was inserted on the supposition that the line was metrical. Make similar changes in the same quotation at p. 219, l. 3.

„ 194, l. 4. Leave space between प्रति and पुष्पचापम् ।

„ 196, l. 4. The phrase वाक्यार्थः seems to be inappropriate and we should read काव्यार्थः । On l, 12, read तेजस्विनामेत्यलं for तेजस्विनोमित्यलं ।

Page 198, l. 10. Read विषयो गोचरं for विषयगोचरं। On l. 12, read सम्बद्धत्वात् for सम्बन्धत्वात्।

" 199, l. 3. The समास requires a यस्य after प्रतिभास:। On l. 20, read पाण्डुरो॰ The emendation in l. 18 can also be ॰मिन्दुः स्पृशन् स्तिमित॰, and we should read चुम्बन् for चुम्बत् in the first line of this verse.

" 200, l. 5. Read माञ्जिष्ठी॰। The phrase अन्यमनोहारि on l. 23, is unusual and probably corrupt. It should be किञ्चिदन्यत् मनोहारि।

" 203, l. 18. Read विनिवर्तनमित्यादि. The word अकारणं in the next line is probably a scribal mistake for अपसारणं।

" 204, ll. 1-4. This quotation is from *Raghu*॰ viii, 7. So read बुभुजे for भीमभुजे and अचिरोपनतां for अभिरोपयति स्म।

" 207, ll. 2-3. Possibly असत्यभूत श्लेष is to be found in the words गोपराग of the illustration, for गो: पराग: is not a matter of fact here but only imagined. On l. 18 it is probably not necessary to read कस्मात् into the text by punctuating the lines 16-18 differently. Delete the *cheda* in l. 16 and read it after ॰भावेनावस्थिति:। Omit कस्मात् and delete the *cheda* on l. 18 after word अन्यस्माद्। On 22, read प्रसिद्धतत्समर्पणा॰।

" 211, l. 2. The third foot of the verse would be better read as उक्तियुगपदर्थानां for the sake of the

metre. Add reference to विक्रमोर्वशीय on l. 21, "iv, 51 (ed. Nirnaya Sag. Press, 1914)".

Page 217, l. 1-2. This statement is probably not correct. The reading is perhaps ससन्देहस्यैवंविधप्रकारत्व० and not ससन्देहस्यैकविधप्रकारत्व० ।

" 218. l. 20. The word गवो: seems to have no force here. Better read फणो: ।

" 220, l. 8. Read भणितिवैचित्र्य० ।

" 222, l. 10. The reading अव्यामूलात् is probably corrupt. It would better be emended as अर्वाङ्मूलात् which suits the sense. The phrase प्रबन्धस्य वक्रता may be emended as प्रबन्धांशवक्रता ।

" 223, l. 2. Better ०समुत्कण्टका: ।

" 224, l. 3. Read इमामेव. On l. 14, for अङ्गम् it would perhaps be better to read अङ्गम् ।

" 225, last line. Read निरुपम०. The reading कविन: as given in footnote (4) may be justified as a synonym for कवे:, deriving the word with णिनि: affix.

" 226, ll. 1-2. The *lacuna* on l. 1 may be filled up with सार्वत्रिक. In l. 2, the phrase प्रधानकार्य ( as emended ) does not give good sense ; read प्रधानवाक्यार्थ. On l. 6, read निजमद्विमकेतन । On l. 9, read स्वकरादङ्गुलीयक० and on l. 15, the reading should be corrected to त्वत्प्रसूति० ।

" 227, l. 14. Read ०र्ज्वलद्दीप्तिभि:. On l. 17, there should

be a *cheda* after बहुवचनम् । Probably द्वयोरपि should be read as द्वयोरिव ।

Page 228, l, 3. Read अत्र for यत्र ।

„ 230, l. 17. Read करुणरसमेव for कारुरसमेव ।

„ 231, l. 14. Read वक्रिमाणं ।

„ 236, l. 4. सुखादिसन्धिसन्ध्यायि would be a better reading. In l. 17, the difficulty in अपरस्मात् may be solved by reading अपरस्मात् परस्य परस्य ।

„ 236, l. 4 and ll. 13-14. The reading पुर्वोत्तरादिसाङ्गत्यात् is perhaps better, as suggested by the commentary on the word on l. 14.

„ 237, l. 1. Should we read सम्भावितदुर्विनयेऽपि निर्वासनव्यसने ? And in the next line, कुवलयप्रदिश्यमाना० ? The misreading विवचता etc. in l. 13 may be emended as विलचताविकलमनसो । The footnote (7) to this page should not be pressed too far; for Kuntaka obviously knew ध्वन्यालोक and आनन्दवर्धन's criticism of Canto VIII.

„ 239, l. 6. My statement here that करुण रस is अङ्गी in *Uttara-carita* is not accurate, although this *rasa* figures prominently in that drama. Here शृङ्गार is अङ्गी ।

„ 240, l. 10. Probably we should read, to fill up the lacunae and regularise the lines : निबध्यमानं यत् तेजस्विवृन्दारकस्य दुरोदरद्वारदूरीभूतविभूतेः ( emending the corrupt reading noted in

footnote 4), and on l. 13, we ought to read पाण्डुनन्दनस्यान्तरायकिरातराजसम्प्रहरणं ।

Page 241, l. 8. Read आधिकारिकफल० ।

,, 244, l. 8. Read कैः—कवीश्वरैः । l. 14, read वक्रिमाणमाधदति । For the lacuna in l. 17, the lost word is apparently रमणीयता ।

,, 245, l. 15. The reading निवेशपेशलि is somewhat peculiar. To regularise it we should read निवेशपेशलताशालि । On l. 17, read प्रगल्भन्त. and in 18, read व्याख्याताः : The gap in the next line may be filled by न्यूनेष्वव० ।

,, 246, l. 5. Place a *cheda* after नागानन्दे ।

In some places व and ब have been confused in printing. Read ब for व in the following of the more important cases: p. 30, l. 10 सुबन्तस्य ; p. 53, l. 22 ०लवोपबृंहित ; p. 55, l. 14 बर्हं ; p. 236, l. 17, बीज । On p. 149, l. 10 द्वयोः should be read as द्वयोः ।

The कारिका ७ on page 153 has been wrongly numbered ; it should be no. 8. The following कारिका's in ch. iii require similar correction.

———